श्रीश्रीगौड़ीय गौरव ग्रन्थ गुच्छः ।

# श्रीश्रीगोपालतापनी

[ उपनिषत् ]

श्रील विश्वनाथचक्रवर्त्तिकृतया विवृत्या
श्रील बलदेव विद्याभूषण कृतेन भाष्येण च
समलङ्कृतं ।

श्रीहरिदास दासेन प्रकाशितम् ।

# अवतरणिका

अथर्ववेदान्तर्गता पिप्पलादशाखीया गोपालतापनीयं सर्वोपनिषच्छिरोरत्नायमाना ब्रह्म गोपालवेशं प्रतिपादयन्ती तस्यैव स्वयं भगवतः सर्वेश्वरत्वं षड़ैश्वर्य्यवत्त्वं तद्भजन-रसन-ध्यानादिकं च सगुणोपासनाक्रमं सपरिपाटि वर्णयित्वा भक्त-हृदयं प्रेमधारयार्द्रीकरोति । श्रीराधाकृष्णयुगलोपासनायां खलु ग्रन्थस्यास्यावश्यकता वरीवर्त्तीति किमु वक्तव्यं । श्रीमन् महाप्रभो रभिमत-वैष्णवसिद्धान्त-निचयैर्भूषितत्वाद् व्रजोपासक-वैष्णवा-नामियमेव परमादरणीया श्रेयस्करी चेति तत्त्वानुसन्धित्सुभि र्विवेचनीयं । एतेनैव हेतुना किल गौड़ीय-वैष्णवाचार्य्याणां श्रीपाद श्रीजीव-विश्वनाथ-बलदेवानां टीकात्रयं गोपालतापनी मवलम्ब्य वैष्णव-कर-कमलं भूषयति । श्रीजीवगोस्वामिनां सुखबोधिनी नाम्नी टिप्पनी खलु बहरमपुरस्थ-राधारमण-यन्त्रालये मुद्रितापि भ्रमात् श्रीविश्वनाथ-चक्रवर्त्तिनां नाम्नैव प्रचारितास्ते। श्रीवृन्दावनस्य श्रीमद्वनमाली लाल गोस्वामिनां ग्रन्थागारस्य तथा श्रील नीलमणि-ग्रन्थागारस्य पुस्तके च टिप्प-नीयं श्रीजीव-गोस्वामिभिः कृतेति विस्पष्टं निरूपितं । अन्तिम-पद्येनाप्येतदेव प्रमाणीकुरुते; तद् यथा—

श्रीसनातनरूपस्य चरणाब्ज-सुधेप्सुना ।
पूरिता टिप्पनी चेयं जीवेन सुखबोधिनी ॥

श्रीलविश्वनाथस्यान्तिम-श्लोकस्तु—

श्रीमद्गोपालतापन्या विवृतिः पूर्णतां गता ।
गान्धर्वासरसस्तीरे विश्वनाथाख्य-लेखकात् ॥

अतः साम्प्रतं श्रीविश्वनाथचक्रवर्त्तिनां तथा श्रीबलदेव-विद्याभूषणानां विवृति--भाष्यसमुपबृंहिता गोपालतापनीयं श्रीगुरु-गौराङ्ग-कृपया मुद्रापिता वैष्णव-सुमनसां मनस्तुष्टिं विदधात्विति सप्रश्रयं प्रार्थयते दीनहीनोऽयं सेवकब्रवः।

श्रीविश्वनाथ-बलदेवयो मूलग्रन्थस्यानुच्छेदरचनायां किल पार्थक्यं वर्त्तते; अत्र श्रीबलदेवानुसारेण बिभागः कृतः, तारतम्यस्थले तु श्रीविश्वनाथधृतपाठे (वि) इति साङ्केतिक-चिह्न-व्यवहार इति मन्तव्यं। श्रीविश्वनाथ-धृत-पाठभेदोऽपि पादटीकायां दृश्यः। मुद्रणदोषादिकं खलु शोधनीयं सोढ़-व्यञ्चेति विनीतनिवेदनम् दीनाश्रवस्य।

## अवश्यं शोधनीयं।

**नवम-पृष्ठायां द्वितीय-पंक्तौ 'तृतीय'मित्यनन्तरं 'वल्लभायेति तुरीयं' पठनीयं।**

# श्रीश्रीगोपाल-तापनी।

## पूर्व-विभागः।

### श्रीश्रीकृष्णाय नमः।

ॐ नमः। सच्चिदानन्द-रूपाय कृष्णायाक्लिष्टकारिणे।

---

श्रीलविश्वनाथ-चक्रवर्त्तिपाद-कृता
श्रीगोपालतापनी-विवृतिः।

मूर्त्तब्रह्मस्वरूपार्थवर्षिणीं भक्त-हर्षिणीं।
गोपालतापनीं नौमि श्रीमद्‌गोपालतापनीं॥

गुज्जरादिदेश-प्रसिद्धपराशरगोत्र-ब्राह्मणसम्प्रदाय-प्राप्ताथर्व्ववेदस्य पिप्पलादशाखापठित-श्रीगोपालतापन्याख्या श्रुतिः श्रीकृष्णस्वरूप-रूपलीलाकारुण्यादिकं प्रतिपादयन्ती तं नमस्करोति सदिति। कृष्णाय देवकीनन्दनायेति सामोपनिषदि 'कृष्णस्तु भगवान स्वयमिति' श्रीभाग-वते च महाप्रसिद्धाय कृष्णाय नमः। कृष्णशब्दव्याचक्षाणैव तत्-स्वरूपमाह—सच्चिदानन्दं यद् ब्रह्म तदेव स्वरूपं यस्य तस्मै। कृष्ण-

---

श्रीगोपालतापनीभाष्यं।
[ श्रील बलदेव-विद्याभूषण-विरचितम् ]
श्रीगोविन्दाय नमः।

सत्यानन्ताचिन्त्यशक्त्येकपक्षे सर्वाध्यक्षो भक्तरक्षातिदक्षो।
श्रीगोविन्दे विश्वसर्गादि-कन्दे पूर्णानन्दे नित्यमास्तां मति र्नः॥
सनातनं रूपमिहोपदर्शयन्नानन्दसिन्धुं परितः प्रवर्द्धयन्।
अन्तस्तमस्तोमहरः स राजतां चैतन्यरूपो विधुरद्भुतोदयः॥
गोपालतापनीं नौमि या कृष्णं स्वयमीश्वरं।
करस्थरत्नसङ्काशं संदर्शयति सद्धियः॥

**नमो वेदान्त-वेद्याय गुरवे बुद्धिसाक्षिणे ॥ १**

शब्दश्च सत्तार्थो णश्चानन्द-स्वरूपकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ।' इति स्मृतेः ; यद्वा सन्तौ सर्वदेशकालसत्ताकौ सर्वोत्कृष्टौ यौ ज्ञानानन्दौ तावेव स्वरूपं स्वाकारो यस्य तस्मै । कारुण्यमाह—अक्लिष्टान् अविद्याऽस्मितादिपञ्चक्लेश-रहितान् जनान् कर्त्तुं शीलं यस्य तस्मै केशि-कंसादिभ्यः स्ववैरिभ्योऽपि मुक्तिप्रदत्वश्रवणात् । अस्यैवं रूपत्वे एव शास्त्र-तात्पर्य्यमित्याह—वेदान्तै र्वेद्याय मोक्षप्रदत्वेनैव वेदितुमर्हाय, नत्वन्यथा । कारुण्यविशेषमाह—गुरवे स्वभजनस्य स्वयमुपदेष्ट्रे । केन रूपेणेत्यत आह—बुद्धिसाक्षिणे अन्तर्य्यामिरूपाय । 'मद्भक्तं कमपि गुरुं कृत्वा मां प्राप्तुं मामेव भजस्व' इत्यन्तर्यामिरूपेण स्वभजने प्रवर्त्तकाय । तथा श्रीभागवतं— आचार्य्य चैत्तवपुषा स्वगतिं व्यनक्तीति' । 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति श्रीगीतोक्तेश्च । स्वप्राप्तिप्रकारस्यापि शिक्षकाय ॥ १

---

औत्कलादिभि राथर्व्वणिकै रधीयमाना पिप्पलादि-शाखान्तस्थितेयं गोपालोपनिषत् स्वप्रतिपाद्यं परेशं प्रणमति—सदिति । कृष्णाय नम इत्यन्वयः । 'कृष्णो वर्णश्च मे यस्मात्तस्मात् कृष्णोऽहमर्जुनेति' नारायणीयात् ; अतसीपुष्पश्यामायेत्यर्थः । कृषिरित्यादि स्मृत्युक्त स्तत्त्वार्थो न कृतः, तस्य सच्चिदित्यनेनोक्तेः । तं स्वरूपेण विशिनष्टि—सदिति । सन्धिनी-शक्त्या सर्वदेशकालव्यापकं स्वस्मै स्वयं प्रकाशमानं तादृशसुखात्मकं रूपं विग्रहो यस्य तस्मै ; किन्तद्रूपमित्यादि वक्ष्यमाण-प्रश्नोत्तरात् अचिन्त्यानन्तशक्तित्वेन विशिनष्टि—अक्लिष्टेति । संकल्पमात्रेण सर्वकर्त्रे इत्यर्थः । विरिञ्चं प्रति सद्यः सेश्वराणां सतत्त्वानां जगदण्डमण्डलानां प्रदर्शनात्, निहतानामसुराणां योगिदुर्लभ-मोक्षार्पणाच्चेदं व्यक्तं । ईदृक्त्वे प्रमाणं दर्शयन्ती विशिनष्टि—वेदान्तेति । एवं विधिनोपनिषद्भि र्बोधितायेत्यर्थः । गुरवे—ब्रह्मादीन् प्रति स्वयाथात्म्योपदेष्ट्रे । उपदिष्टार्थानुभवेऽपि स एव हेतुरित्याह—बुद्धीति ।



ॐ मुनयो ह वै ब्राह्मणमूचुः । कः परमो देवः ? कुतो मृत्यु र्बिभेति ? कस्य ज्ञानेनाखिलं विज्ञातं भवति ? केनेदं विश्वं संसरतीति ? २

तदुहोवाच ब्राह्मणः । कृष्णो वै परमं दैवतं । गोवि-

---

गुरुकृपालब्धमष्टादशाक्षर-मन्त्रप्रकरणकं तदाराधनं वर्णयितुं मुनिः प्रश्नानवतारयति—मुनय इति । ह स्पष्टं । ब्रह्म वेदं वेत्तीति ब्राह्मणः परमेष्ठी तं । अखिलं प्राकृताप्राकृतं सर्वं वस्तु ॥ २

परम दैवतमिति—भजनस्य कृष्णविषयेण स विषयो भवतीत्यर्थः मृत्यु र्बिभेतीति गोविन्दरूपेण स एव गोचारको व्याघ्रादू गा उप मृत्यो र्जीवानपि रक्षतीत्यर्थः । तस्मिन्नेव गोपीजनानां वल्लभत्वेनानुभूते सति इदं प्राकृताप्राकृतं वस्तु सर्वमेव बिनानुसन्धानमपि ज्ञातं भवतीति

---

बुद्ध्यधिष्ठातृतया तदनुभवस्थैर्य्यकारकायेत्यर्थः । तथा च विभु विज्ञानानन्दः श्यामसुन्दरः सार्व्वज्ञ्य-सत्यसङ्कल्पादिगुणगणो विश्वोत्पत्त्यादिहेतुः कारुणिकः सर्वेश्वरो मया प्रणतो मामुरीकरोत्विति नमस्कारमात्र-निर्देशान्निष्कामोऽत्राधिकारी, कृष्णोऽत्र विषयः, वाच्यवाचकभावः सम्बन्धः, कृष्णाप्तिः प्रयोजनमित्यनुबन्ध-चतुष्टयं बोध्यम् ॥ १

सामान्य-विशेषाभ्यां प्रश्नोत्तराभ्यां जिज्ञासितोत्तमार्थोपलम्भात् तदुपलम्भाय तथैव श्रुतिः प्रवर्त्तते—ओमिति पुनर्मङ्गलार्थं, तस्य निखिलवेदात्मकत्वात् ; मुनयो ब्रह्मपुत्राः सनकादयः । ह वै स्मरणे । ब्रह्माणं विरिञ्चिं, उत्तरत्र हैरण्य इत्युक्तेः, ऊचुः पप्रच्छुः—परमो नित्यश्रीकः समाभ्यधिक-रहितः देवः सर्वाराध्यः को भवति ? गुणान् पप्रच्छुः—कुत इति, को मृत्युनिवारक इत्यर्थः । कस्येति—अखिलं कृत्स्नं भगवत्तत्त्वं । केनेति—केन हेतुनेदं सर्वं जगत् संसरति स्वस्वकार्य्येषु प्रवर्त्तते, कः सर्वप्रवर्त्तक इत्यर्थः ॥ २

एवं सामान्येन पृष्टो ब्राह्मणः पृष्टानर्थानुत्तमाद् विशेषेण प्रत्युवाचेत्याह

न्दान् मृत्यु र्बिभेति। गोपीजन-वल्लभज्ञानेन तज्ज्ञातं भवति। स्वाहयेदं संसरतीति ॥ ३

तदुहोचुः। कः कृष्णो गोविन्दश्च कोऽसाविति, गोपीजनवल्लभः कः, का स्वाहेति ? ४

तानुवाच ब्राह्मणः। पापकर्षणो गोभूमिवेदविदितो

---

न ततोऽधिकमन्यज् ज्ञानं नास्त्येव। गोपीवल्लभ-विषयिणी भक्ति र्हि भक्तिपरमकाष्ठा भवति। 'भक्त्या मामभिजानाति' इत्युक्तेः। भक्तिपरमकाष्ठायां तस्यां सत्यां ज्ञानपरमकाष्ठापि भवेदित्युक्तेः स्वाहेति स्व एव स्वाहारूपेण जगदिदं वध्नाति चेत्यर्थः ॥ ३-४

पापानि प्रारब्धाप्रारब्ध-सञ्चितानि कर्षति नाशयति, पापं चित्तमपि स्वीय-लीलायामाकर्षति। पापपुरुषान् पूतनाघकेश्यादीन् असुरानपि स्वहतान् मुक्तिदानार्थमाकर्षति इति कृष्णः स एव परम-कृपालुत्वात् परमं दैवतमिति भावः। गोषु व्रजस्थसुरभिषु विदित

---

—तदुहेति। तत्तान् प्रति उ अवधारणे ब्राह्मणः वेदार्थवित परब्रह्मानुभवी विरिञ्चः उपदेक्ष्यमाण-मन्त्रार्थरूपतया 'कृष्णो वै' इत्यादीन्युत्तराणि स दत्तवानिति बोध्यं ॥ ३

श्रुतानां कृष्णाद्यर्थानां गुणविशेषान् बोद्धुं पुनस्तं पप्रच्छु रित्याह—तदिति। ततो मुनय स्तं ब्राह्मणं प्रति उ निश्चये ह प्रस्फुटं ऊचुः पप्रच्छुः। क इत्यादि शब्दानां निरुक्तिभिरेव तदर्था निःसन्देहभावेन प्रतीति मासीदेयुः, अत स्तेषां निरुक्तिद्वारा तान् प्रकाशयतु भावानिति भावः ॥ ४

क्रमादुत्तरं स ददावित्याह —तानिति। 'कृषे वर्णे नगि'त्यनुशासनाद् वर्णनिमित्तं कृत्वा प्राक् प्रवर्त्तितं कृष्णशब्दं अर्थान्तरं तत् कृत्वा प्रवर्त्तया-मासेत्याह—पापकर्षण इति। योऽविद्यान्त-सर्वपापविनाशी स मया कृष्ण-



गोपीजनाऽऽविद्या कलाप्रेरक स्तन्माया चेति, सकलं परं

---

स्तद् ब्रह्मकत्वात, भूमौ गोशब्दवाच्यायां पृथिव्याञ्च विदित स्तद्द्वारा-वतारकत्वात, गोशब्दवाच्येषु वेदेष्वपि विदित स्तद्वाच्यत्वात; अतः सुरभि पृथ्वीवेदान् गाः पालयितुं विन्दतीति गोविन्दः। स च जीवानपि मृत्योः पालयतीति भावः। गोपायति सकलमिदं, गोपयति वा पुरं पुमांसमिति गोपी प्रकृतिः, तस्यां जात जन इति महदादिकं पृथिव्यन्तमिति क्रमदीपिकोक्तेः। गोपीजनै र्मायिकै स्तत्त्वै र्जीवेष्व-विद्यां प्रेरयति इति सः। यद्वा गोपीजनेषु व्रजदेवीजनेषु ह्लादिनीशक्ति-

---

शब्देनोक्तः। 'कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते। भस्मीभवन्ति तस्याशु महापातक-कोटयः।' 'कृष्णः कृष्णः कृष्ण इत्यन्तकाले जल्पन् जन्तु र्जीवितं यो जहाति। आद्यः शब्दः कल्पते तस्य मुक्त्यै व्रीडा-नम्रौ तिष्ठतो द्वावन्यस्था'वित्यादि स्मृतिभ्यः। गोभूमीति—गोषु पशुविशेषेषु भूषु वेदेषु च यो विदितः ख्यातः स सुरभीस्वामी सकललोकान्तर्यामी तथात्वेन सर्ववेद-वेद्यो मया गोविन्द शब्देनोक्तः। गो शब्दो हि नानार्थः, 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दग् वाग्दिग् वाग् भूष्वप्सु भूम्नि चेति मेदिनीकरकोषात्। एकशेषोऽत्र वृत्तिः। ईदृशतया तदुपालीनानां संसारभयं विनिवर्त्तते इति गोविन्दान् मृत्यु र्बिभेतीत्युक्तं। गोपीति—गोपीजनाः श्रीराधाद्य स्ता एवाविद्या कला स्तासां प्रेरकः आ सम्यग्भूता विद्याः प्रेमभक्तिविशेषा स्तद्भूताः कला मूर्त्तयः, तासां स्वलीलासु प्रवर्त्तको रमण इति वल्लभ-पदार्थो दर्शितः। वक्ष्यति चैवमुत्तरं—'स वो हि स्वामी भवतीति'। ह्लादसंवित्सारो भक्तिः, सच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीत्युत्तरत्र वक्ष्यमाणात। तद्भूताः श्रीराधादयो हरे र्मायय एवेति कला-शब्देनोक्ताः। 'आनन्दचिन्मयरसप्रतिभाविताभि स्ताभि र्य एव निजरूपतया कलाभि'रिति, 'वल्लभ्यो मे मदात्मिका' इति च स्मरणात्। ताभि र्विशिष्टं परं तत्त्वमखण्डमिति गोपीजनवल्लभज्ञानेनेत्यादिकमुक्तं। तद् विशिष्टत्वे हि

ब्रह्मैवैतत् ॥ ५

वृत्तिरूपेषु अविद्याप्रेरणस्यासम्भवात् अविद्याशब्देन मोहन-साधर्म्यात् प्रेमोच्यते ; कला विस्तारः । क्लीङ्कली कामधेनू । यद्वा गोपीजनेषु अविद्याकलां अज्ञानचन्द्रकलां प्रेरयतीति सः । स्वसौन्दर्य्यमाधुर्य्यादिभि र्ज्ञानमपहृत्य स्वप्रेम्ना तान् मोहयतीत्यर्थः । वल्लभः खलु स्वगुणैः स्वप्रेयसी र्यन्मोहयति, तदेव तस्य वल्लभता । अत स्तन्माधुर्य्य-करणक-तदीयमोहनाज्ञानं सर्वज्ञानतोऽपि वरिष्ठं जीवन्मुक्तात्मारामेष्वपि अदृष्टत्वादिति भावः । स्वाहा तन्माया । सकलमिति—मायाया स्तच्छक्तित्वेन तदनन्यत्वादिति भावः ॥ ५

तत्प्रकाशातिशयः । 'तत्राति शुशुभे ताभि' (भाग १०।३३।७) रित्यादि स्मृतेः । तन्माया चेति—स्वाहा-शब्देन यया तस्य माया परोक्षाशक्ति रुक्ता, यया सर्वेषां प्रवृत्तिरिति केनेदं विश्वं संसरतीति स्वाहयेदं संसरतीत्युक्तं । स्वरूपशक्ताविह माया-शब्दः । स्वरूप-भूतया नित्यशक्त्या मायाख्यया युतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनमिति श्रुतेः । 'त्रिगुणात्मिकाऽथ ज्ञानं च तथा चिच्छक्तिरेव च । मायाशब्देन भण्यन्ते शब्दतत्त्वार्थवेदिभि' रिति शब्दमहोदधेश्च । यत्त्वविद्याकलेति गोपीजनेषु मोहप्रवर्त्तकमाहु स्तदसत्, स्वात्मभूतेषु तेषु तदसम्भवात्, माया परेत्यभिमुखे च विलज्जमानेत्यादि स्मरणात् (भाग) यच्च तन्माया चेत्यत्र त्रिगुणमाहु स्तन्मन्दं, तस्याः सर्वप्रवर्त्तकत्वाभावात् । न खलु त्रिगुणया नित्यपार्षदाः कालश्च प्रवर्त्तन्ते, अपितु स्वरूपशक्त्यैव परया त्रिगुणापीति परैव तादृशी तन्मायेति सुष्ठूक्तं । एवं मुनिप्रश्नानुसारेण चतुरोऽर्थान् पृथगिवाभिधाय सिद्धान्ते तेषामैक्यमभिहितं । सकलमिति—एतत् पूर्वोक्तं अर्थचतुष्टयं सकलं साङ्गं कृष्णाख्यं नराकृति परं ब्रह्मैवेत्यर्थः । गोविन्दादिद्वयस्येन कृष्णस्यैव विशेषणात् । तन्मायाया स्तत्स्वरूपशक्ते स्ततो न व्यतिरेकाच्च । अस्यैव परं ब्रह्मत्वमुत्तरत्र वक्ष्यते । कथ वाह्यावतारस्य ब्रह्मता भवतीत्यादिना ॥ ५



* यो ध्यायति रसति भजति सोऽमृतो भवति, सोऽमृतो भवति ॥ ६

ते होचुः । किं तद्रूपं ? किं रसनं ? कथं वा हो तद्भजनं ? तत् सर्वं विविदिषतामाख्याहीति ॥ ७

तदुहोवाच हैरण्यो गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रितं ॥

रसति उच्चारयति रस शब्दे, भजति परिचरति । अमृतः मरणधर्मा न भवति तत्पार्षदो भवतीत्यर्थः । नन्वत्र स्वाहा-शब्दस्य मायार्थत्वे गोपीजनवल्लभाय मायेत्यस्य कोऽर्थः ? उच्यते—नेयमुपपद-विभक्तिः, किन्तु कारक-चतुर्थी । ततश्च दीयत इति क्रिया आक्षेपलब्धा, चतुर्थ्या स्त्वन्यथानुपपत्त्यैव, प्रविश पिण्डमितिवत् माया मायिकं अहन्तास्पदं ममतास्पदञ्च । यद्वा तादर्थ्ये चतुर्थी तदर्थमेव सर्वं बुद्धीन्द्रियादिकमस्त्वित्यर्थः ॥ ६-७ ॥ हैरण्यः ब्रह्मा ॥ ८

एतद् विचिन्तनात् परमं पुमर्थं दर्शयन् तत्त्वं स्थापयति समस्ताह—यो ध्यायतीति । यो मन्त्रं तदेव ध्यायति रसति मन्त्रात्मकं जपति भजति नवविधया भक्त्या मन्त्रदेवतामनुकूलयति, सोऽमृतो मोक्षीभवति । आवृत्तिः प्रकरण-समाप्त्यर्था । एतद् यो ध्यायतीति केचिदेव पठन्ति ॥ ६

ध्यानादीनि श्रुत्वा ध्येयादीन् ते मुनयः पप्रच्छुरित्याह—ते होचुरिति । किं तदिति किंप्रकारं कीदृशमित्यर्थः । किं वितर्केऽव्ययं प्रश्ने चापे निन्दा-प्रकारयोरिति श्रीधरः । रूपं ध्यानास्पदं, रसनं जप्यं, कथं वा तद्भजनमिति किंप्रकारकमित्यर्थः । प्रकारे किमस्थमुः प्रत्ययः । अहो ब्रह्मन् ॥ ७

तत्र रूपमाह—गोपवेशमिति । वेणुशृङ्गधरमित्यर्थः । एवमुपरिष्टाद् वक्ष्यति ॥ ८

* एतद् ।

तदिह श्लोका भवन्ति ॥ ६

सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं ।
द्विभुजं ज्ञानमुद्राढ्यं * वनमालिनमीश्वरम् ॥
गोप-गोपीगवावीतं सुरद्रुमतलाश्रयं ।
दिव्यालङ्करणोपेतं रक्तपङ्कज-मध्यगम् ॥
कालिन्दीजल-कल्लोल-सङ्गिमारुत-सेवितं ।
चिन्तयं श्चेतसा कृष्णं मुक्तो भवति संसृतेः ॥१०(वि ६)

ध्यायतीत्युक्तमतोऽस्य मन्त्रस्य ध्येयं रूपमाह—सदिति । वेणु-वादनाशक्तत्वान्मौनमुद्रा ॥ ६

रूपं विशदयति स्मेत्याह—तदिहेति । इह रूप-निरूपणे श्लोका मंत्राः ॥ ६

सदिति—विकसितारविन्दनेत्रमित्यर्थः । 'खरदण्डं लोकनन्दं पुण्डरीकं महोत्पलमिति' धनञ्जयकोशे पद्मसामान्य-पर्यायात । तेनारुण्यांश-लाभात अतिचारुत्वसिद्धिः । अरविन्दनेत्रादि शब्दा हि तस्मिन् प्रयुज्यन्ते । वैद्युतं विद्युत्प्रभमिवाम्बरं वासो यस्य तं । ततः प्रभवतीत्यण् । ज्ञाने या मुद्राऽवचनेनैव वक्तृता तयाढ्यं प्रेयसीमनस्कतया वेणुनादाऽऽविष्टत्वादिति भावः । मौनमुद्राढ्यमिति क्वचित । अधीश्वरस्य पुण्डरीक-नयनत्वादिना विशेषणाद् विग्रहस्यैव स्वरूपत्वमुक्तं । एवमेवाह भगवान् सूत्रकारः—'अरूपवदेव तत प्रधानत्वात्' । 'आह च तन्मात्रम् ।' इत्यादिना । द्विभुजमिति विशेषणाद् गोकुले तथोपासनमुक्तं । गोपेति—गोपाः श्रीदामसुबलादयः, गोप्यः श्रीराधाचन्द्रावल्यादयः, गावः कामदुघा पिशङ्ग्यादयः, ताभि रावीतं यथावसरं परिवृतं । परिकरान्तराणामुपलक्षणमेतत् । इति शब्दो ध्यान-समाप्त्यर्थः ॥

* मौनमुद्राढ्य ।



रस्यं पुनारसनं जलभूमीन्दुसंपातकामादि कृष्णाये-त्येकं पदं गोविन्दायेति द्वितीयं गोपीजनेति तृतीयं स्वाहेति पञ्चममिति ॥ ११

पञ्चपदीं * जपन् पञ्चाङ्गं द्यावाभुमी सूर्य्याचन्द्रमसौ

किं रसनमित्यस्योत्तरमाह—रस्यमुच्चार्य्यं जप्यं इत्यर्थः । पुनारसनमिति पुनः पुनः जप एव रसनमित्यर्थः । जलं तद्वाचि-ककारः, भूमि स्तद्बीजं लकारः, अग्निवाची ईः ईकारः, इन्दुरनुस्वारः तेषां मिलनं यत्र तत् क्लीमिति कामः कामबीजं तदादि ततश्च जलीकृताः प्रेम्णा द्रवरूपीकृता स्तद्विशिष्टा ये भक्तजना स्तैरा शोभा यस्य स चासाविन्दु

किं रसनमित्यस्योत्तरं रस्यमिति—पुनर्ध्येयोक्त्यनन्तरं रसनं कथन-मित्यर्थः । किन्तदित्युक्तं रस्यमिति लघु लघूच्चार्य्यं जप्यमित्यर्थः । रस शब्दे 'तस्मात कर्मणि ल्युट' पुच्च प्रत्ययः । मन्त्रस्वरूपं गूढ़तया दर्शयति स्मेत्याह—जलेति । क-कार स्तद्वाचित्वात् । भूमीति ल-कार स्तद्वीजत्वात् । ताभ्यां परो दीर्घ ई-कारः सन्धिना तिरोहितो बोध्यः । इन्दुरनुस्वार स्तद्वर्तु-लत्वात् । तेषां संपात उक्तानुपूर्व्या सम्पर्क स्तेन सिद्धं यत् कामबीजं तदादिकं कृष्णायेत्येकं पदं, गोपीजनेत्यत्र लुप्तां विभक्तिमाश्रित्य पदत्वं बोध्यं ॥ ११

पञ्चाङ्गानि हृदयादीनि तत्तत्स्थाने न्यस्यानि यस्य तद् यथास्यादेवं जपन् तस्यां पञ्चपद्यां भगवन्नित्यविभूती द्यावाद्याः पञ्चाधिष्ठातृदेवताः क्रमाद् विचिन्तयन्नित्यर्थः । तद्रूपतया तन्मन्त्र-प्रतिपाद्यगोपाल-सादृश्येन ब्रह्म तमेव स-परीवारं गोपालं संपद्यते लभते । अत्र व्याचक्षते—उत्तरत्र तच्छब्दात् पूर्वत्र यच्छब्दो गम्यः । ततश्च ये द्यावाभूमी ऊर्ध्वाधः प्रदेशा यो च साग्नी सूर्य्याचन्द्रमसौ तद्रूपतया तत्प्रकाशकतया पञ्चाङ्गं ब्रह्म संपद्यते । अत्राद्याभ्यां

* पञ्चपदं ।

साम्नी तद्रूपतया ब्रह्म संपद्यते ब्रह्म संपद्यते इति ॥१२ (वि१०)

तदेष श्लोकः। क्लीँमित्येतदादावादाय कृष्णायेति गोविन्दायेति च गोपीजनवल्लभाय बृहद्भानव्या सकृदुच्चरेत्। या गति स्तस्यास्ति मंक्षु नान्या गतिः स्यादिति ॥१३(वि११)

---

राह्लादकश्च कृष्ण इति वीजार्थो उक्तो भवति। पञ्च अङ्गानि हृदयादीनि तत्तत्स्थाने न्यस्यानि यस्य तद् यथा स्यात्तथा। पञ्चपदं मन्त्रमिमं जपन् ब्रह्म श्रीकृष्णं सम्पद्यते सम्यकतया प्राप्नोतीत्यर्थः। द्यावेति—द्यौभूसूर्य्यचन्द्राग्न्यादीन् तद्रूपतया भावयन् पञ्चानामेषामेव पदानां क्रमेण ते पञ्च विभूतयो भाव्या इत्यर्थः॥ १०

जपपरिपाटीं दर्शयति—क्लीमित्येतदादावादाय उच्चरे कृष्णायेति चतुर्थ्यन्त-पदेन योगो यस्य तत्। बृहद्भानु र्महाप्रकाशः परमेश्वरो वह्नि र्वा तदीयया स्वाहया सहितं मंक्षु तस्यैव गति रस्ति कृष्णप्राप्तिरूपा पूर्वोक्ता नान्या, नत्वन्येत्यर्थः॥ ११

---

पदाभ्यामादिमयो र्द्यावाभूम्योः सर्वाश्रयतायाः प्रकासनं। उत्तरै स्त्रिभिः पदै रुत्तरेषां सूर्य्यचन्द्राग्नीनां सर्व्वप्रकाशकतायाः प्रकाशनञ्च सूच्यते। प्रथमस्य पदस्य सर्व्वोर्ध्वमाहात्म्य-नामयोगित्वात द्यावा योगः, द्वितीयस्य भूमौ प्रकाशमान-तादृश-वैभवत्वाद् भूम्या योगः, तृतीयस्य सर्वतोऽप्युद्दीप्तभावत्वात सूर्य्येण योगः। तुर्य्यस्य तत्कान्त्या सर्वाह्लादनाच्चन्द्रमसा योगः, पञ्चमस्य तस्य तत्रार्पणस्य नित्य-सम्बन्धादग्निना योगो बोध्यः। पदद्वये नराकृति परं ब्रह्म गोपालं प्राप्नोतीत्येवार्थः। हैरण्य-चन्द्रध्वजयो स्तथा वक्ष्यमाणत्वात। आवृत्तिरिह रसनोपनिषत् पूर्त्ति-द्योतिका॥ १२

पूर्वोक्तं पुष्यान्नुवाच—तदेष इति। बृहद्भानव्या वह्निपत्न्या स्वाहयेत्यर्थः। उक्तानुपूर्व्या यः सकृदुच्चरेज्जपेत्, तस्य पूर्वोक्ता कृष्णाख्या गतिः फलं मंक्षु शीघ्रमेव भवेत्। 'द्राक् मङ्क्षु स्पदि द्रुते' इत्यमरः। ततो-



भक्तिरस्य भजनं तदिहामुत्रोपाधि-नैरास्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यमिति॥ १४ ( वि १२ )

---

कथं वाहो तद्भजनमित्यस्योत्तरमाह—भक्तिरिति। भजन निर्वक्ति—इहलोके परलोके च उपाधि-नैरास्येन कामना-राहित्येनैव अमुष्मिन् श्रीकृष्णे मनःकल्पनं मन आदि सर्वेन्द्रिय-विनियोग इत्यर्थः। तेन फलाकाङ्क्षारहितं कृष्णस्मरण-श्रवणादिकं भजन मिति भजन-लक्षणमुक्तं भवति। ननु किं मोक्षमपि न कामयेत्तत्राह—एतदेव नैष्कर्म्यं मुक्तिः। हरावैकान्तिकी भक्ति र्मुक्तिरित्यभिधीयते इति पाद्मात्। यथा वर्णविधानमपवर्गश्च भवति भक्तियोग इति पञ्चमस्कन्धाच्च॥ १२

---

ऽन्या गति र्न भवेत्। तस्मादेतदेव रसनं दृढविश्वासेन गुरो प्राह्यमिति भावः॥

कथं वा हो तद्भजनमित्यस्योत्तरं—भक्तिरस्येति। पुराणभाग प्रसिद्धा श्रवण-कीर्त्तनादि-लक्षणा भक्तिरस्य कृष्णस्य भजनं। तथामुष्मिन् कृष्णे मनःकल्पनं च। मनः कल्प्यते समर्प्यतेऽनेनेति निरुक्तेः। श्रवणादिहेतुको भावश्च तस्य भजनमित्यर्थः। 'भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनुमिति' स्मृतेः ( भाग ११ )। उत्तमात्व-सिद्धये विशिनष्टि—तदिहेत्यादिना। लोकद्वयसुख-स्पृहा-परित्यागेन तत्पदमात्र वाञ्छया जायमानमित्यर्थः। एतदेव नैष्कर्म्यं नित्यनैमित्तिक-कर्मानावृतमित्यर्थः। स्वार्थे ष्यञ्। अनुषङ्गेन मोक्षकरञ्चेत्येके। तथा च कृष्णान्यफलेच्छाशून्य नित्यादिकर्मानावृतं कृष्णानुकूल्यं भजनमिति श्रवणादे र्भावस्य च प्राप्तिरिति निष्कर्षः। एवमुक्तं श्रीनारदपञ्चरात्रे—'सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्। हृषीकेण हृषीकेश-सेवनं भक्तिरुच्यते' इति। सर्वेति—तदन्यफलेच्छा-रहितत्वं। तत्परत्वेनेति--आनुकूल्येन जायमानत्वं। निर्मलमिति कर्मानावृतत्वं। हृषीकेणेति श्रोत्रादीन्द्रियवर्गेण संपाद्यं हृषीकेशस्य विष्णोः सेवनं श्रवणादि-लक्षणं भावलक्षणं चानुकूल्यं भक्तिरुच्यते। आनुकूल्यञ्चात्रोद्दिश्याय रोचमाना प्रवृत्तिः॥

कृष्णं तं विप्रा * वहुधा यजन्ति, गोविन्दं सन्तं वहुधाराधयन्ति गोपीजनवल्लभो भुवनानि दध्रे स्वाहाश्रितो जगदेजयत् सुरेताः ॥ १५ ( वि १३ )

---

भजन-प्रकारान् भजनफलं भजनव्यतिरेकफलञ्च मन्त्रपदैरेव दर्शयति—कृष्णमिति। यजन्ति नारदादय इव शास्त्रमार्गेण पूजयन्ति। गोविन्दमाविष्कृतकैशोरवयसं सन्तं गोप्य इव रागमार्गेणाराधयन्ति। दध्रे धारयति भजनफलप्रदानेन पुष्यति च। स्वाहा माया तं आश्रिता। उ इत्यव्ययं सम्वोधने पादपूरणे वा। जगत् एजयत् भजनव्यतिरेकेण संसार-प्रवाहेण कम्पयति इत्यर्थः। सुरेताः अति-वलवता शोभनं रेतो भगवद्वीर्य्यं यस्यामिति वा ॥ १३

---

तदेवं तन्मन्त्र-संवद्धं तद्भजनमुपदिश्य तस्यैव मन्त्रस्य वैशिष्ट्यं दर्शयतिस्मेत्याह—कृष्णमिति। अनिर्भात-संवन्धविशेषं सर्वेश्वरत्वेनावगतं तं नराकृति चित्सुखविग्रहं कृष्णं वैदिका विप्रा वहुधा यजन्ति विधि-विजृम्भितै र्वहुभिरुपचारै रर्चयन्ति। तमेवं गोविन्दं गोपाल-लीलं निर्भात-सम्वन्धविशेषं सन्तं गोकुलवासिवद् रागलुब्धा विप्रा वहुधा स्व-सम्वन्धोचितै रुपचारै राधयन्ति सेवन्ते। स एव गोविन्दो गोपीजनवल्लभः सन् भुवनानि दध्रे-ऽनुगृह्य धारयति स्मेति। तादृशश्चोपासक-परंपरया भुवनानां व्याप्तत्वात्तेषु तस्यानुग्रहविशेषो दर्शितः। स्वाहाश्रितः स्वभावानुसारि-स्वोपासककृतमा-त्मनिवेदनं प्राप्तः। स्वीकृत-तदात्मनिवेदनः कृष्णो जगदेजयत् कम्पयतिस्म, जगद्वर्त्तिनः स्वोपासकान् स्वप्रेम्णा यथायोगं विवशीकरोतिस्मेत्यर्थः। सुरेता स्तद् वैवश्य-विधाने महावीर्य्यः। इह वीजानुक्ति स्तन्मन्त्रान्तर्भावापेक्षया वोध्या ॥ १५

---

* ब्राह्मणा।



वायु र्यथैको भुवनं प्रविष्टो जन्ये जन्ये पञ्चरूपो वभूव। कृष्ण स्तथैको जगद्धितार्थं शब्देनासौ पञ्चपदो विभातीति ॥ १६ ( वि १४ )

ते होचुः। उपासनमेतस्य परमात्मनो गोविन्दस्या-खिलाधारिणो ब्रूहीति ॥ १७ ( वि १५ )

तानुवाच। यत्तस्य पीठं हैरण्याष्टपलाशमम्वुजं तदन्तरालिकानलास्त्रयुगं 'तदन्तराद्यर्णाखिलवीजं' कृष्णाय

---

अथ तस्यैकस्यापि तत्तत्पदेनार्थवैशिष्ट्यं दृष्टान्तेन स्पष्टयति वायुरिति। जन्ये देहे पञ्चरूपः प्राणादिरूपः पञ्चपदो मन्त्रः ॥१४-१५

तत्र यन्त्रात्मकं पीठं दर्शयति—यत्तस्येति। तदन्तरालिकं

---

एकस्यैवार्थस्य तत्तत्पदे राविर्भाव-वैशिष्ट्यं दृष्टान्तेनोवाच—वायुरिति। जन्ये जन्ये देहे देहे पञ्चभिः प्राणादिनामभि र्निरूप्यत इति पञ्चरूपः शब्देन तत्तन्नाम्ना पञ्चभि र्विशेषैः पद्यते ज्ञायते इति सः ॥ १६

अथास्य गोपालस्यार्चापद्धतिं ते पप्रच्छुरित्याह— ते होचुरिति। उपास्यतेऽस्मिन्निति उपासनं, अधिकरणे ल्युट्। अखिलाधारिणः सर्वतत्त्वा-श्रयस्य ॥ १७

एवं पृष्टो हैरण्यो यन्त्रात्मकं तावत पीठमुपदिदेशेत्याह—तानिति। यत्तस्य पीठं, तत्तान् प्रत्युवाच इत्यन्वयः। एवमत्र वोध्यं—स्वपूजानिकेते प्रक्षालितं पीठं संस्थाप्य हैरण्याष्टपलाशं सौवर्णाष्टदलमम्वुजं स्थापयेत्। चन्दनेन वा गन्धधूपितेन तद् विलिखेत्। तदन्तरालिके तस्याम्वुजस्य मध्यभवे प्रदेशे अनलास्त्रयुगं त्रिकोणद्वयं संपुटितं विलिखेदित्यर्थः। तस्य षट्कोणस्यान्तरा मध्ये आद्यार्णं-रूपमखिलस्य कार्य्यस्य वीजं कामवीजं साध्य नाम कर्म्म च विलिखेदिति शेषः। एवमुक्तं सनत्कुमार-संहितायां—

नम इति वीजाढ्यं स-ब्रह्माणमाधाय' * अनङ्गगायत्रीं यथावद्

तस्या अन्तरालिकं अन्तरा मध्ये भवं । अनलास्रयुगं ऊर्ध्वाधोभावेन त्रिकोणद्वयं तदन्तस्तन्मध्ये आद्यार्णं आद्याक्षरं कामवीजं खिलवीतं खिलै र्न्यूनै रितरमन्त्राक्षरै र्वीतं वेष्टितं कृष्णाय नम इति वीजाद्यं कामवीज-सहितं षड़क्षरमित्यर्थः । ब्रह्म प्रणवः अगो हिमालयः पितृत्वेन यस्या अस्ति सा अगा पार्वती तद्वीजं ह्रीमिति तन्त्रेण अं विष्णुं गच्छतीति अगा लक्ष्मी स्तद्वीजं श्रीमिति च आधाय अर्पयित्वा

'कर्णिकायां लिखेद्वह्नि-पुटितं मण्डलद्वयं । तस्य मध्ये लिखेद् वीजं साध्याख्यं कर्मसंयुतमिति' । वीजाढ्यं कामवीजेन युक्तं कृष्णाय नम इत्यक्षर-षट्कं षट्‌स्वस्रसन्धिषु विलिखेत् । एवं क्रमदीपिकायामुक्तेः । सब्रह्माणमिति—पूर्वलिखित-कर्णिकास्थितमनङ्गवीजं सब्रह्माणमष्टादशार्णेन मन्त्रेणोपेतमाधाय संपाद्येत्यर्थः । तदुक्तं तस्यामेव—ततः शिष्टै र्मनोर्वर्णै स्तं कामं वेष्टयेत् सुधीरिति मन्त्र-तद्द्रष्ट्रो रभेदोपचारात मन्त्रो ब्रह्मा तेन सहितमित्येके । मन्त्र-तद्देवतयोरैक्यात्तथाभूतं विभाव्येत्यपरे ; षटकोणस्य पूर्व-नैऋत्यवायव्य-कोणेषु श्रींवीजं विलिखेत् । आग्नेय-पश्चिमैशान-कोणेषु ह्रीं वीजं विलिखेत् । यदुक्तं तस्यामेव—'श्रियं षट्कोणकोणेषु रौद्रं नैऋत्यवायुषु । आलिखर विलिखेन्मायां वह्निवारुण-शूलिष्विति । अनङ्गगायत्रीमिति— अष्टदलस्य केसरेषु 'कामदेवाय विद्महे' इत्यादिकां चतुर्विंशत्यक्षरां कामगायत्रीं यथा वत्रिश स्त्रिशो विलिखेत् । नमः कामदेवाय सर्वजन-प्रियाय सर्वजन-संमोहनाय ज्वल ज्वल प्रज्वल सर्वजनस्य हृदयं मम वशीकुरु वशीकुरु स्वाहेत्यष्टचत्वा-रिंशदक्षरं मालामन्त्रषट्पङ्क्तरक्रमेण प्रतिदलं विलिखेदित्यपि वोध्यं । अष्ट-दलस्योपरिवृत्तं कृत्वा मात्रिकाक्षरै र्वेष्टयेदिति च वोध्यं । अक्षरैः कामगायत्र्या वेष्टयेत केसरे सुधीः । काममालामनोर्वर्णै र्दलेष्वष्टसु मन्त्रवित । लिखद्-

* तदन्तराद्यर्णं खिलवीतं कृष्णाय नम इति वीजाद्यं ब्रह्माण-माधाय ।



व्यालिख्य भूमण्डलं शूलवेष्टितं कृत्वाङ्ग वासुदेवादि रुक्मि-

अनङ्गमनुगायत्रीं कामवीज-सहित-कामगायत्रीं यथावद् व्यालिख्य वेष्टयित्वा भूमण्डलं शूलवेष्टितं कृत्वा दिक्षु ततोऽङ्गानि हृदय-शिरः शिखास्त्राणि वासुदेवादयो वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः वाण्यादि वाणीलक्ष्मीशान्तिरतयः स्वशक्तयो विमलाद्या नव, यद्वा रुक्मिण्याद्या अष्टौ, इन्द्रादयो वज्रादयश्चेत्यावरणद्वयं वसुदेवादयः वसुदेवदेवकी

गुहाननै र्भक्तै· र्मात्रिकां स्तद्वहि र्लिखेदिति तस्यामेवोक्तेः । इह गुहाननैः षड्‌भिः भक्तै र्विभक्तै रक्षरैरित्यर्थः । भूमण्डलं शूलेति—भूगृहं चतुरस्रं स्यादष्टवज्रयुतं मुने । इति तस्यामेवोक्तेः । अस्यैव धारणयन्त्रत्वात साध्यादिलिखनमप्यादावसूसुचत् । अतएव धारण-विधानं तत्फलञ्च तस्या-मेवोक्तं 'हुत्वा सहस्रमाज्येन यन्त्रे संपात-पूर्वकं । मार्जयित्वाऽयुतं हुत्वा धारयेद् यन्त्रमुत्तमं । त्रैलोक्यैश्वर्य्यमाप्नोति देवैरपि सुपूजितः' इत्यादिभिः । यत्तु पूजार्थं यन्त्रं, तच्चोक्तं तस्यामेव—मण्डकादिपृथिव्यन्तं पूजयेत कर्णिको-परि । अग्न्यादिपीठपादेषु धर्मादीं श्चतुरो यजेत् । तारवर्ण-प्रभिन्नानि मण्डलानि क्रमात्ततः । सत्त्वं रज स्तम इति यजेदात्मचतुष्टयं । आत्मा-न्तरात्मा परमात्मा ज्ञानात्मेति च क्रमात । विमलोत्कर्षिणी ज्ञाना क्रिया योगेति पञ्चमी । प्रह्वी सत्या तथेशानानुग्रहा नवमी स्मृता । प्रागाद्यष्टसु पत्रेषु कर्णिकायां यजेन्मुनिः । "ॐ नमो भगवते सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोग-योगपद्मपीठात्मने नम" इति मन्त्रपद्मोपरि विन्यस्योक्तसंहिता-नुसारेण 'ततः पीठं समभ्यर्च्य देवमावाह्य नारद । अर्घ्यादि-धूपदीपादी-नुपचारान् प्रकल्पये'दित्येवं वोध्यं ।

अथावरण-पूजा । तत्र प्रथममावरणमाह—अङ्गमिति । षटकोण-स्याग्नेयनैऋत्य-वायव्यैशानेषु हृदयशिरः शिखा कवचान्यग्रभागे नेत्रं पूर्वादिदिक्षु चास्त्रमित्यङ्गानि पूजयेत । द्वितीयमाह—वासुदेवादीति । पूर्वपश्चिमयाम्यो-त्तरेषु दलेषु वासुदेवसंकर्षण-प्रद्युम्नानिरुद्धान् क्रमादाग्नेय-नैऋत्यवायव्यैशानेषु

एयादि-'स्वशक्तीन्द्रादि' * वसुदेवादि-पार्थादि-निध्यादि-वीतं यजेत् ‡ ॥ १८

---

नन्दयशोदा-बलभद्रसुभद्रा-गोपगोप्यः, पार्थादयः पार्थनारद-पर्वत-शठोद्धवदारुक-विष्वक्सेन-सात्यकयः, अग्रे गरुड़श्च निधयो इन्द्रनील-कुमुदनन्दक-कच्छप-मकर-शङ्ख-पद्माः तै रा समन्तात् वीतं वेष्टितं

---

शान्तिश्रीसरस्वती-रतीश्च पूजयेत् । तृतीयमाह—रुक्मिण्यादीति । या रुक्मिणीसत्याजाम्बवतीनाग्नजितीमित्रविन्दाकालिन्दीलक्ष्मणासुशीलाः स्वस्य कृष्णस्य प्रसिद्धाः शक्तयः ता दलेषु पूजयेत । चतुर्थमाह—तच्च वसुदेवादि बोध्यं । पूर्वभागे वसुदेवाय पीताय अग्निकोणे देवक्यै श्यामलायै दक्षिणभागे नन्दाय कर्पूरगौराय नैर्ऋत्ये यशोदायै कुङ्कुमगौर्य्यै पश्चिमभागे बलदेवाय कुन्देन्दुधवलाय वायव्ये कलायश्यामलायै सुभद्रायै उत्तरकोणे गोपेभ्यः ऐशान्ये गोपीभ्य इति । देवकी-यशोदयो र्वर्णविभाग स्तस्यामुक्तः । एवं गौतमीयतन्त्रे चास्ति । पञ्चममाह—तच्च पार्थादि बोध्यं । अर्जुन-निशठो-द्धव-दारुक-विष्वक्सेन सात्यकि-गरुड़-नारद-पर्वताः क्रमेण । षष्ठमाह—तच्च निध्यादि बोध्यं । पूर्वस्मिन् इन्द्रनिधये आग्नेये नीलाय याम्ये कुन्दाय नैर्ऋत्ये मकराय पश्चिमेऽनङ्गाय वायव्ये कच्छपाय उत्तरे शंखाय ऐशान्ये पद्मायेति । सप्तममाह—तच्चेन्द्रादि बोध्यं । पूर्वदले पीतवर्णायेन्द्राय एवमाग्नेयादिषु अग्नये रक्तवर्णाय यमाय नीलोत्पलवर्णाय रक्षोधिपतये कालवर्णाय वरुणाय शुक्लवर्णाय वायवे धूम्रवर्णाय कुवेराय नीलवर्णाय ईशानाय श्वेतवर्णाय पूर्वेशानयो र्मध्ये ब्रह्मणे गोरोचनवर्णाय । नैर्ऋत्य-पश्चिमयो र्मध्ये शेषनागाय श्वेतवर्णायेति । अष्टमञ्चैवं—वज्राय पीतवर्णाय शक्तये शुक्लवर्णायै दण्डाय नीलवर्णाय खड्‌गाय श्वेतवर्णाय पाशाय विद्युद्वर्णाय ध्वजायै रक्तायै गदायै नीलायै त्रिशूलाय शुक्लायेति बोध्यं । शाखाभेदात् क्वचित् किञ्चित् पाठभेदोऽस्ति, स च तथैव बोध्यो व्याख्येयश्च ॥ १८

---

* स्वशक्तीन्द्रवज्रादि । ‡ यजेत ।



सन्ध्यासु प्रतिपत्तिभिरुपचारै स्तेनास्याखिलं भवत्य-खिलं भवतीति ॥ १९ ( वि १६ )

तदिह श्लोका भवन्ति—

एको वशी सर्वगः कृष्ण इड्य एकोऽपि सन् बहुधा यो विभाति ।
तं पीठस्थं ये नु भजन्ति धीरा स्तेषां सुखं शाश्वतं नेतरेषाम् ॥
२० ( वि १७ )

---

यजेत् । सन्ध्यासु त्रिसन्ध्यं, अतिशयेन पत्तिः प्राप्ति र्येषां तैः सुलभैः पत्रपुष्पादिभिरित्यर्थः ॥ १९

---

उक्त--पीठस्थ कृष्णमर्चयतः फलमुवाच—सन्ध्यास्विति त्रिसन्ध्य-मित्यर्थः । प्रतिपत्तिभि र्ध्यानैः उपचारैः पञ्चभिः षोड़शभिश्च यथाशक्ति निबोध्यं । अतिपत्तिभिरिति पाठेऽतिशयिता पत्तिः प्राप्ति र्येषां तैः तुलसी-पुष्पादिभिः सुलभैरित्यर्थः । तेन यजनेनास्याखिलं वाञ्छितं भवतीत्यावृत्ति रुपनिषत्पूर्त्ति-द्योतिका ॥ १९

अथ तस्मिन्नुपासने मन्त्र-सङ्गतिं दर्शयन्नुपास्यस्यानन्यापेक्षिरूपत्वं स्वयंभगवत्त्वमुवाच — तदिहेति । एको मुख्यः स्वयं भगवानित्यर्थः । 'कृष्णस्तु भगवान् स्वयम्' ( भाग १।३।२८ ) इत्यादि-स्मरणात् । वशी सर्वेषां स्वेतरेषां प्रकृतिकालयोश्च नियामकः । सर्वगो विभुः । इड्य स्तथात्वेन स्तुत्यः । एकोऽपि सन्नेकत्वमजहदेव बहुधा नारायणादिभावेन यो विभाति नित्यं प्रकाशते । सर्वधर्माविर्भावी स्वयं, प्राय स्तत्समो नारायणो विलासः, यथायथं धर्मोनत्वे व्युहः स्वांशः कला चेति । विशेष-जिज्ञासायां भाष्यपीठकादिकं द्रष्टव्यं । पीठस्थमुक्तपीठे विराजमानं, शाश्वतं नित्यम् ॥ २०

नित्यो नित्यानां चेतन श्चेतनानामेको वहूनां यो विदधाति कामान्। तं पीठगं ये ऽनुयजन्ति विप्रा स्तेषां सिद्धिः शाश्वती नेतरेषां ॥ २१ (वि १८)

एतद् विष्णोः परमं पदं ये नित्योद्युक्ताः संयजन्ते न कामान् *। तेषामसौ गोपरूपः प्रयत्नात् प्रकाशयेदात्मपदं तदैव ॥ २२ (वि १९)

यो ब्रह्माणं विदधाति पूर्वं यो वै विद्या स्तस्मै गापयति स्म कृष्णः। तं ह देवमात्मवुद्धि-प्रकाशं मुमुक्षु वैं शरणममुं ब्रजेत् ॥ २३ (वि २०)

---

ईश्वरत्वान्नित्यः चिद्रूपत्वान्नित्यानां जीवानां ॥ १८ ॥ पदं स्वरूपं आत्मपदं स्वचरणं ॥ १९ ॥ विदधाति सृजति, आत्मा वुद्धिः

---

अथाखिलाभ्युदय-फलदत्वमते मोक्षदत्वं चाह स्म— नित्य इति। यो नित्य श्चेतन एको नित्यानां चेतनानां वहूनां विरिञ्चादीनां जीवानामुपासितः सन् कामान् वाञ्छितानि विदधाति निष्पादयति, तमुक्तपीठगं कृष्णं ये सांप्रतिका विप्रा वैदिकाः अनुयजन्ति तेषामन्ते सिद्धि र्मुक्तिश्च। अत्र नराकृते स्तस्य नित्यत्वमुक्तं वोध्यं ॥ २१

ये तु कृष्णैककामा स्तेभ्यः स्वं ददातीत्युवाचैतदिति— एतत् प्रागुक्तं पीठरूपं पदं संयजन्ते इति प्रीत्या राधयन्ति, नतु ततोऽन्यान् कामानिच्छन्तीति शेषः। आत्मपदं स्वचरणं स्वगोकुलं च। तदैवेत्यर्चिरादि-निरपेक्षः स्वयमेव नयतीत्येवमुक्तं सूत्रकृता—'विशेषं च दर्शयतीति' ॥ २२

उक्तस्य कृष्णस्यानादित्वं दर्शयं स्तत् कृपयैवार्चकस्येष्टसिद्धिरित्युवाच—य इति। विदधात्युत्पादयति। विद्या श्चतुरो वेदानष्टादशार्थान्तात्।

---

* कामात्।



ॐकारेणान्तरितं ये जपन्ति गोविन्दस्य पञ्चपदं मनुं तं। तेषामसौ दर्शयेदात्मरूपं तस्मान्मुमुक्षु रभ्यसेन्नित्यं शान्त्यै ॥ २४ (वि २१)

एतस्मादन्ये पंचपदादभुवन् गोविन्दस्य मनवो मानवानां दशार्णाद्या स्तेऽपि संक्रन्दनाद्यै रभ्यस्यन्ते भूतिकामै र्यथावत् ॥ २५ (वि २२)

यदेतस्य स्वरूपार्थं वाचा वेदयतेति ते पप्रच्छुः ॥२६ तदुहोवाच ब्राह्मणः (वि २३) 'असावनवरतं' * मे ध्यातः

---

तद्वृत्तीर्ना प्रकाशो यस्मात्तं ॥ २०।२१ ॥

मनवो मन्त्राः संक्रन्दनाद्यै रित्यन्वयः। सनकाद्यै र्मुक्तिकामै र्नारदाद्यै र्भक्तिकामै श्चेत्यर्थः ॥ २२ ॥ एतस्य मन्त्रस्य स्वरूपात् जातो

---

आत्मवुद्धि-प्रकाशं ब्रह्मादीनां जीवानां ज्ञानप्रदं। त्वत्तो ज्ञानं हि जीवानामिति स्मरणात्। एतेन श्वेतवाराह-कल्पगत-वैवस्वत-मन्वन्तरीयाष्टाविंशति चतुर्युगान्तर्वर्त्ति-द्वापरावसाने गर्भोदशयात कृष्णोऽभूदिति दुर्धियां शङ्का छिन्ना।

उक्तस्य मन्त्रस्य प्रणव-सम्पुटितत्वेन जपात् सद्यः प्रोक्तफलसिद्धि रित्युवाचोमिति। अन्तरितं संपुटितं कृत्वा मुमुक्षु स्तत्सेवाविरोधि-सर्वं त्यक्तुमिच्छुः अभ्यसेदावर्त्तयेत्। नित्यशान्त्यै निर्द्वन्द्वनित्यतत्पदलाभायेत्यर्थः ॥

मन्त्रराजस्य मन्त्रान्तराविर्भावकतामुवाचैतस्मादिति। मानवानां नानावाञ्छितवतां जीवानां कृते। संक्रन्दनाद्यै रिन्द्रादिभिः ॥ २५

मुनीनां प्रश्नान्तरं यदिति—एतस्य मन्त्रराजस्य यत्स्वरूपार्थं स्वरूपे स्थितं निखिल-जगदुत्पादन-शक्तिरूपमर्थं वाचाभिधायकशब्देनावेदय वोधयेति ते मुनयः पप्रच्छुः ॥ २६

---

* ब्रह्मरूवनं चरतो।

स्तुतः परार्द्धान्ते सोऽबुध्यत ॥ २७

गोपवेशो मे पुरस्तादाविर्बभूव ( वि २४ ) ; ततः प्रणतो मयानुकूलेन हृदा मह्यमष्टादशार्णं स्वरूपं सृष्टये दत्त्वान्तर्हितः ॥ २८ ॥ पुनः सिसृक्षतो * मे प्रादुरभूत्ते-ष्वक्षरेषु भविष्यज्जगद्रूपं प्रकाशयन् ‡ ॥ २९ ( वि २५ )

---

योऽर्थो यद् यद् वस्तु तं आवेदय ॥ २३

किमुवाचेत्यत आह—असौ गोपालः मया ध्यातः स्तुतः कदा परार्द्धान्ते प्रथमपरार्द्धस्यान्ते पाद्मकल्पस्यान्ते । पूर्वस्य आदौ परार्द्धस्य इत्यनन्तरं तस्यैव चान्ते कल्पोऽभूत, यं पाद्ममभिचक्षते इति श्रीभागवतं । अबुध्यत मत्कर्तृक-ध्याने स्तवे च सावधानं प्रकटी चकारेत्यर्थः ॥ २४

ततो मया प्रणतः नमस्कृतः सन् ततश्च तेष्वक्षरेषु सूक्ष्मरूपेण जगदस्तीति प्रकाशयत कृष्ण एव स्वयं स्फोरयामास इत्यर्थः ॥ २५

---

तदुहेति—तत्तमर्थं तान् मुनीन् प्रति ब्राह्मणो हैरण्यः प्रत्युवाच—हे मुनयः! असौ गोपालः कृष्णः मे मया अनवरतं सन्ततं ध्यातः स्तुतः परार्द्धान्तेऽबुध्यत सानुग्रहो ज्ञात इत्यर्थः ॥ २७

ततो गोपवेषो वेणुशृङ्गधरः स पुरुषो मे पुरस्तादाविर्बभूव मन्त्र-गोचरोऽभूदित्यर्थः । अनुकूलेन सानुग्रहेण हृदा स्वरूपमात्मभूतमिति निखिलजगदुत्पादन शक्तिमत्त्व तस्य दर्शितं । सृष्टये दत्त्वेति मत्प्रभावानुसारेण फलान्तरं च मम महदभ्युदैदिति भावः ॥ २८

तदनन्तरं सिसृक्षतो मे ध्यातः सन् पुनः प्रादुरभूत् साक्षाज्जात इत्यर्थः । तेष्वेव मन्त्राक्षरेषु भविष्यतो जगतः सौक्ष्म्येण स्थितं रूपं प्रकाशयन् मद्गोचरं

---

* सिसृक्षा । ‡ प्रकाशयत् ।



तदिह कादापो लात्पृथिवी ईतोऽग्नि र्विन्दो रिन्दु स्तत्संपातादर्क * इति क्लीँकारादसृजं (वि२६) । कृष्णायादा-काशं खाद् वायुरित्युत्तरात् सुरभिं विद्याः प्रादुरकार्षं । तदुत्तरात् स्त्रीपुमादि चेदं सकलमिति सकलमिति ॥३०(वि२७)

---

कात् कामवीजान्तर्गतककार-जपप्रभावात् आपो जाता इति शेषः । लात् पृथिवी, ईत ईकारादग्निः विन्दोरनुस्वारात् इन्दु श्चन्द्रः तस्य नादादर्कः ॥ २६

खाद् वायु रभूदिति शेषः । उत्तराद् गोविन्दायेति अस्मात् सुरभिं गोजातिं तदुत्तरात् गोपीजनेत्यस्मात् विद्याश्चतुर्दश । तदुत्तरात् वल्लभायेत्यादितः । अवादीनामीश्वरसृष्टत्वेनोक्ति स्तेन सह स्वाभेद-ज्ञापिका । तस्य तदीयकर्मकार-पुरुषत्वात्, यथा राजकीयः पुरुषो राजा ॥ २७

---

कुर्वन्नित्यर्थः ॥ २९

यथाप्रकाशितं यथा च सृष्टं तदुवाच—तदिति । तस्मिन् जगद्रूपे प्रकाशिते सति इह मन्त्रे स्थितात् कादापो जलानि लात् पृथिवी ईतोऽग्निः विन्दो रनुस्वारादिन्दुः तत्संपातात् तेषां कादीनां समुदायादर्क इति व्यस्तसमस्त-भूतात् क्लीँकारादहं पञ्चार्थानसृजं । कृष्णायात् कृष्णेत्यक्षरद्वयादाकाशं, यात् ङे विभक्त्यादेशाद् वायु रिति 'कृष्णाय'पदादर्थद्वयमसृजं । उत्तरादिति—गोवेद-विदितत्वार्थकाद् 'गोविन्दाय'-पदात् सुरभिं कामधेनुं विद्या श्चतुर्दश प्रादुरकार्षं प्रकटितवानस्मि । तदुत्तराद् 'गोपीजने'त्यादि-पदात् स्त्रीपुमादि-रूकलं विश्वमिति । पदावृत्ति रूपनिषत्समाप्ति-द्योतिका । नन्ववादीनां तत्त्वानां भगवत्सृष्टत्वं सर्वत्र पठ्यते, हैरण्य-सृष्टत्वमिहोक्तं कथं सङ्गच्छेतेति चेत्, सत्यं ; विसर्गे परिणाम-विशेष-प्रापणेन तेषां तत्सृष्टत्वमित्यविरोधः ॥

---

* स्तन्नादादर्कः ।

एतस्यैव यजनेन चन्द्रध्वजो गतमोहमात्मानं वेदयित्वा ॐ कारान्तरालिकं मनुमावर्त्तयन् सङ्गरहितोऽभ्याप तत् ॥ ३१ ( वि २८ )

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततं ॥ ३२ ( वि २९ )

---

गतमोहं यथा स्यात्तथा आत्मानं स्वं वेदयित्वा तदनुभवयुक्तं कृत्वा ॐकारयो रन्तरालं मध्यं आन्तरालिकं अन्तराले वर्त्तमानं मनुमिममावर्त्तयन् प्रणवपुटितं मन्त्रं जपन्नित्यर्थः। अभि आभिमुख्येन आप तत् तदीयं धाम ॥ २८

चन्द्रध्वज-प्राप्यं धाम-विशेषं ज्ञापयति—तदिति तत् तत्र वैकुण्ठे परमं पदं वैकुण्ठादपि श्रेष्ठं धाम श्रीगोलोकं पश्यन्ति सूरयः। सदेति कालापरिच्छेद उक्तः। कस्मिन् किमिव दिवि आकाशे आततं चक्षुः सूर्य्यमिव। 'नमः सवित्रे जगदेकचक्षुषे' इत्यत्र च चक्षुःपदेन सूर्य्याभिधानात् ॥ २९

---

अथ मन्त्रस्य मुख्यं फलमन्यत्र जातं दर्शयामासेत्याहैतस्येति। मन्त्रराजस्य चन्द्रध्वजो राजर्षिं र्गतमोहं विनष्टाविद्यं यथा स्यादेवमात्मानं त्वंपदार्थं स्वं दासभूतं वेदयित्वा विज्ञाय सङ्गरहितो विरक्तः सन्नोंकारान्तरालिकं प्रणव-संपुटितं मनुमावर्त्तयन्नभ्याप तत तत्पदार्थस्य मन्त्रवेद्यस्य गोपालस्य साक्षिध्यमगादित्यर्थः। विश्वेश्वरभट्टस्तु चन्द्रध्वजो महादेव इति व्याचख्यौ ॥

यत्राभ्याप तत्तद् गोपालस्याधिष्ठान मुवाच—तदिति। विष्णो र्व्यापकस्य गोपालदेवस्य तद् गोकुलादिरूपं परमं श्रीमत् पदं स्थानं 'पदं व्यवसितित्राण-स्थान-लक्ष्माङ्घ्रि-वस्तुष्विति' नानार्थवर्गः। सूरयो नित्यनिवृत्ततमसो नित्यमुक्ताः सदा पश्यन्तीत्युक्तेः। उपाय-निवृत्ततमसो मुक्ताश्च सूरयः तेषां तेषां च बहूनां तत्र सत्त्वाद् भगवद्-गुणविभूतीनां नारण्यचन्द्रिकात्वप्रसङ्गः।



तस्मादेतन्नित्यमभ्यसेन्नित्यमभ्यसेत् ॥ ३३ (वि ३०)

तदाहुरेके। यस्य प्रथमपदाद् भूमि र्द्वितीयपदाज्जलं तृतीयपदात्तेज श्चतुर्थपदाद्वायु श्चरमपदाद्व्योमेति वैष्णवं पञ्चव्याहृतिमयं मन्त्रं कृष्णावभासकं कैवल्यसृत्यै सततमावर्त्तयेदिति ॥ ३४ ( वि ३१ )

तदत्र गाथाः—यस्य पूर्वपदाद् भूमि र्द्वितीयात् सलिलोद्भवः।
तृतीयात्तेज उद्भूतं चतुर्थाद् गन्धवाहनः ॥

---

एतं मन्त्रं ॥ ३०

मतभेदमाह—तदिति वैष्णवाः पञ्च व्याहृतयः एतानि पञ्च पदानि विष्णोः पञ्च उक्तय इत्यर्थः। व्याहार उक्ति र्लपितमित्यमरः। तन्मयं तदात्मकं मन्त्रं कृष्ण-प्रकाशकं कैवल्येन ज्ञानकर्माद्यमिश्रणेन या सृतिः शुद्धभक्तिमार्गः तस्यैतत् प्राप्त्यर्थं ॥ ३१

इममेवार्थं गाथाभिराह यस्येति ॥ ३२

---

कीदृशं तत्पदं दिव्याकाशे चक्षुः सूर्य्यं इव तद्वद् भासुरं चिद्घनमित्यर्थः। 'नमः सवित्रे जगदेकचक्षुषे' इत्युक्तेः सूर्य्यस्य चक्षुष्ट्वं। आततमिति विस्तीर्णमपरिमितमित्यर्थः। तथा च धाम-पार्षदविशिष्टं कृष्णं प्रापेति ॥ ३२

तस्मादिति—एतं मन्त्रं ॥ ३३

कादिभ्योऽवादि-सृष्टि रुक्ता। कदाचिदेवमपि सृष्टि र्भवेदित्युवाच—तदेति। एके तन्मात्रज्ञाः। यस्येत्यादिकं स्फुटार्थं। इत्थं च मन्त्रे सर्वजनकता-शक्ति रस्तीति सूचितं। वैष्णव्यः पञ्च व्याहृतयः पूर्वोक्तानि पञ्चपदानि तन्मयं मन्त्रं कृष्णस्यावभासकं प्रकाशकं कैवल्यसृत्यै मुक्तिमार्गं लब्धुं ॥ ३४

तत्रेति—तस्मिन् मन्त्रे गाथाः श्लोका भवन्ति। 'गाथा श्लोके संस्कृ-

पञ्चमादस्वरोत्पत्ति स्तमेवैकं समभ्यसेत् ॥३५
( वि ३२ )

चन्द्रध्वजोऽगमद् विष्णोः परमं पदमव्ययं ॥ ३६
( वि ३३ )

ततो विशुद्धं विमलं विशोकमशेषलोभादि-निरस्तसङ्गं ।
यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ॥
३७ ( वि ३४ )

---

अगमत् यदभ्यस्येति शेषः ॥ ३३

विशिष्टाः शुद्धा श्चिन्मया लोका यत्र । विमलं माया मालिन्य रहितं विशोकमनश्वरत्वात् शोकरहितं लोभादीनां निरस्तः सङ्गो यत्र तत् । यत्तस्य विष्णोः पदं गोलोकाख्यं धाम तदेव पञ्चपदं अष्टादशाक्षरमन्त्रः, तदेव पञ्चपदमेव स वासुदेवो यतो वासुदेवादन्यद् वस्तु नास्ति ॥ ३४

---

तान्यभाषार्था शेषवृत्तयोरिति' मेदिनीकरः ॥ ३५

चन्द्रध्वजस्य परमभक्तत्वात्तद्वृत्तं पुनरुवाच—चन्द्रेति स्फुटार्थं ॥ ३६

पदं विशिनष्टिस्म—तत इति । उक्तमहिम-प्रचयाद्धेतो यंत्तत् पदं तद्धि चिन्त्यमिति शेषः । कीदृक् विशुद्धं चिदेकरसं विमलं मायामलशून्यं अतो विशोकं अशेषै र्लोभादिभि र्निरस्तः सङ्गो यस्य तत्तद्रहितमित्यर्थः । पुनः कीदृक्—पञ्चपदं मन्त्रात्मकं स एव वासुदेवः वादवेद्यः कृष्ण इत्यर्थः । 'वसनादेव वादे च वासुदेवेति शब्दित' इति श्रीहरिवंशे शिवोक्तेः । इत्थं त्रयमेकात्मकमेकवदुपास्यमित्युक्तं । तत्त्ववुभुत्सु-कथा खलु वादः कथ्यते ; यतो वासुदेवादन्यन्नास्ति, तदायत्त-वृत्तिकत्वेन, तद्व्याप्यत्वेन, तच्छक्तित्वेन च सर्वस्य ताद्रूप्यादिति भाष्यपीठकादावस्य विस्तरः ॥ ३७



तमेकं गोविन्दं सच्चिदानन्द-विग्रहं पञ्चपदं वृन्दावन-सुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या तोषयामि ॥ ३८ ( वि ३५ )

ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे ।
विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥ ३९ (वि ३६)

नमो विज्ञानरूपाय परमानन्द-रूपिणे ।
कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥४० (वि ३७)

नमः कमलनेत्राय नमः कमलमालिने ।
नमः कमलनाभाय कमलापतये नमः ॥ ४१ ( ३८ )

---

समरुद्गणः देवगणेन सहितः । 'मरुतौ पवनामरौ' इत्यमरः ॥ ३५ ॥ विश्वस्मिन्नपि रूपं सौन्दर्य्यं यस्य तस्मै विश्वाय विश्वरूपाय ॥३६
विज्ञानं ब्रह्मानन्दः ।' परमानन्दः प्रेमा ॥ ३७-३८ ॥

---

अथान्ते स्वध्येयं हैरण्यो मुनीन् प्रत्युपदिदेश—तमिति । पञ्चपदं मन्त्रात्मकं समरुद्गणो देवगणसहितोऽहं 'मरुत् पुंसि सुरे वाते' इति श्रीधरः । प्रकाशद्वयमेकीकृत्य स्तुतिरियं नेया । त्रिपादूर्ध्वे गोकुलादिधाम्नि कृष्णो नित्यं विभाति, स कदाचित् सधाम-पार्षदः प्रपञ्चेऽप्याविर्भवेत् । प्रपञ्चान्तर्गते गोकुलादौ स्फुटमस्फुटं च विहरेत् । विलीने तु प्रपञ्चे त्रिपादादूर्ध्वस्थेनैतत् संयोजयेदिति वस्तुस्थितिः ॥ ३८

ऐश्वर्य्य-माधुर्य्ययो र्द्वयोः संपृक्तयो रतिचारुत्वात्तन्मयी स्तुतिः कृता—ॐ नम इत्यादिभि र्द्वादशभिः । विश्वरूपमुत्पादयतीति तस्मै विश्वाय जीव-प्रधानशक्त्या जगदात्मने ॥ ३९

जीवादि-सर्वाश्रयं विशेष्यं कीर्त्तयन् तुष्टाव—नमो विज्ञानेति ॥ ४०

वर्हापीड़ाभिरामाय रामायाकुण्ठमेधसे ।
रमामानसहंसाय गोविन्दाय नमो नमः ॥ ४२ ( वि ३९ )
कंसवंश-विनाशाय केशि-चानूर-घातिने ।
वृषभध्वज-वन्द्याय पार्थ-सारथये नमः ॥ ४३ ( वि ४० )
वेणुवादनशीलाय 'गोपालाहित-मर्दिने' । *

---

रामाय वलदेव-स्वरूपाय ॥ ३९।४० ॥ लोलाभ्यां कुण्डलाभ्यां

---

नम इति—कमलानां गोपीनां पत्ये कान्ताय। 'लक्ष्मीसहस्रशत-संभ्रमसेव्यमानमिति' 'श्रियः कान्ताः कान्तः परमपुरुष' इति च ब्रह्मसंहिता-वचनात ॥ ४१

वर्हेति—शिखिपिञ्छ-सेखर-मनोहराय, रामाय वलभद्ररूपाय, अकुण्ठ-मेधसे पूर्णप्रमितये सर्वज्ञायेत्यर्थः। रमागोकुल-महालक्ष्मीः श्रीराधा देवी तस्या मानसं चित्तमेव मानसरस्तस्मिन् हंसाय, परम्परित-रूपकं संश्लेषमेतत। श्रीराधादेव्या महालक्ष्मीत्वञ्च—'द्वे पार्श्वे चन्द्रावली राधिका च यस्या अंशो लक्ष्मी दुर्गादिका शक्ति' रिति पुरुषबोधन्यां श्रवणात्। 'देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः संमोहिनी परेति' गौतमीयाच्च ॥ ४२

कंसेति—त्रिपुर-निपातित-रथेन वृषभ-ध्वजेन शिवेन रथोत्तोलनात्, स्वतेजोर्पणाच्च युद्धपराभूतेन वा तेन स्तुत्यायेत्यर्थः। पार्थस्य सारथये तद्रथे स्थित्वा कालदृष्ट्याऽसंख्य-तद्रिपुविनाशकाय, विनष्टेभ्य स्तद्रिपुभ्यो मोक्षदाय चेत्यर्थः ॥ ४३

वेणिवति— लोलाभ्यामनर्घमौक्तिकशोभिताभ्यां कुण्डलाभ्यां वल्गवे मनोहरायेत्यर्थः। अत्र देवदेवस्य राजपुत्रस्य च कृष्णस्य नृत्यशालिने वेणु-

---

* गोपालायाहिमर्दिने।



कालिन्दीकूललोलाय लोलकुण्डल-वल्गवे ॥४४ (वि ४१)
वल्लवीनयनाम्भोज-मालिने नृत्यशालिने ।
नमः प्रणत-पालाय श्रीकृष्णाय नमो नमः ॥४५ (वि ४२)
नमः पाप-प्रणाशाय गोवर्द्धन-धराय च ।
पुतना-जीवितान्ताय तृणावर्त्तासुहारिणे ॥४६ (वि ४३ )
निष्कलाय विमोहाय शुद्धायाशुद्धिवैरिणे ।
अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥४७ ( वि ४४ )

---

वल्गवे अतिमनोहराय ॥ ४१

मालाकारेण पतितत्वात् वल्लवीनयनाम्भोजमाला विद्यते यस्य तस्मै ॥ ४२।४३

निष्कलाय मायातीताय। यद्वा निष्कं वक्षोभूषणं लातीति

---

वादनशीलायेति यन्नृत्यगीत-कारित्वमुक्तं, तन्नापकर्षकं, तथाभूते शिवे भरतेऽर्जुने च तद्दर्शनात्। तत्प्रियायाणाञ्च तथाभूतानां नापकर्षकं शिवायामुत्तरायां च तद्दर्शनादिति वोध्यं। जीविकार्थमेव तत्तादृशं, नत्वास्वादार्थं च, स्वसेवि-निवेदितस्य नृत्यादेः समनुभवादुत्कर्षकञ्च। एवं गोपालनञ्च तस्य नापकर्षकं, यज्ञपुरुषता-लक्षणस्य स्वधर्मसंपादनात्। गव्यैरेव तस्य सिद्धे रिति वोध्यं ॥

वल्लवीनां प्रेयसीनां प्रत्यहं पश्यन्तीनां नयनान्येवाम्भोजानि तान्येव दर्पणोज्ज्वले तद्विग्रहे प्रतिविम्बितत्वात मालारूपाणि सन्ति यस्य तस्मै ॥ ४५

नम इति—कीर्त्तितः स्मृतश्च सन् पापमविद्यां प्रणाशयतीति तस्मै ॥ ४६

निष्कलाय—पदकधारिणे, 'निष्कमस्त्री साष्टहेमशते दीनार-कर्षयोः। वक्षोलङ्करणे हेमपात्रे हेमपलेऽपि चेति' मेदिनीकरः। विमोहाय अज्ञान-निवर्त्तकाय ज्ञानप्रदायेत्यर्थः। अशुद्धिवैरिणे दैत्यादिभावहराय, असुरेभ्योपि निहतेभ्यो

प्रसीद परमानन्द प्रसीद परमेश्वर।
आधिव्याधि-भुजङ्गेन दष्टं मामुद्धर प्रभो ॥४८ (वि ४५)
श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर।
संसार-सागरे मग्नं मामुद्धर जगद्गुरो ॥ ४९ ( वि ४६ )
केशव क्लेशहरण नारायण जनार्दन।
गोविन्द परमानन्द मां समुद्धर माधव ॥ ५० ( वि ४७ )

अथ हैवं स्तुतिभि राराधयामि यथा यूयं तथा पञ्चपदं जपन्तः कृष्णं ध्यायन्तः संसृतिं तरिष्यथेति होवाच हैरण्यः ॥ ५१ ( वि ४८ )

---

तस्मै। विमोहाय ब्रह्मरुद्रादिभि र्मोहयितुमशक्याय। परदार-ग्रहणेऽपि शुद्धाय। अशुद्धिवैरिणे तल्लीलाश्रवणादि-पराणामशुद्धिनाशकाय। परमेश्वरान्तराभावादद्वितीयाय ॥ ४४-४८ ॥

---

मोचदायेत्यर्थः। अद्वितीयाय स्वतुल्यद्वितीय-रहिताय अतो महते ॥ ४७

आधि र्वाञ्छितालाभे मानसी व्यथा, व्याधि स्तदलाभे कायिकी सा। उद्धरोद्धृत्य स्वपदान्तिकं नयेत्यर्थः ॥ ४८ ॥ गोपीजनानां मनांसि विचित्रै र्वेश-भूषणै रानुकूल्याचरणैश्च हरसीति तदनुरक्तायेत्यर्थः ॥ ४९

हे केशव विधिरुद्रयो र्जनक इति ब्रह्मणो नाम। "ईशोऽहं सर्वदेहिनां। आवां तवाङ्गसम्भूतावतः केशवनामभागिति" हरिवंशे कृष्णं प्रति शिवोक्तेः। हे जनार्दन श्रेयोऽर्थिभि र्जनै र्याचनीय ॥ ५०

स्वभक्तिं पुत्रानुपदिदेशेत्याह—अथेति। एवमीदृशीभिः स्तुतिभि र्यथाहमाराधयामि, तथा यूयं सनकादयः। स्फुटमन्यत् ॥ ५१



अमुं पञ्चपदं मन्त्रमावर्त्तयेद् यः स यात्यनायासतः केवलं तत्पदं ॥ ५२ ( वि ४९ )

अनेजदेकमनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शदिति ॥ ५३ ( वि ५० )

तस्मात् कृष्ण एव परो देव स्तं ध्यायेत्तं रसेत्तं भजेत्तं

---

तत् परं ब्रह्म ॥ ४९

तदेवाह—अनेजत् न स्पन्दते, अथच मनसः सकाशादपि जवीयः वेगवत्तरमिति विरोधः। वस्तुतस्तु अनेजत् निश्चलं मनसोऽपि जवीयः। तच्छक्त्यगोचरः। एतत् ब्रह्म देवा ब्रह्मरुद्राद्या अपि न प्राप्नुवन् न जानन्ति। यतः पूर्वमर्शत्, तेभ्यो महदहङ्कारादिभ्यो ब्रह्मरुद्रादिभ्यः पूर्वं तदुत्पत्तेः प्रागेवमर्शत् 'बहु स्यामिति' परामर्शं कुर्व्वत् ॥ ५०

तस्माद् ब्रह्मतोऽपि कृष्ण एव परो देवः। 'ब्रह्मणो हि प्रतिष्ठाहमिति' गीता। मदीयं महिमानं च परं ब्रह्मेति शब्दितं इति श्रीभागवताच्च। रसेत् कीर्त्तयेत्। रसयेदिति पाठे तन्माधुर्य्यमास्वादयेत्।

---

अमुमिति—यः कोऽप्याधुनिकः प्राप्तीकृतगुर्वाश्रयणः अनायासतः श्रमं विनैव केवलं विशुद्धं तस्य पदं धाम ॥ ५२

पदं विशिनष्टिस्मानेजदिति — अनेजन्निश्चलं मनसो जवीयस्तस्याशुद्धस्यागोचरं देवा अपि यन्नाप्नुवन् ज्ञातुं नाशक्नुवन् कीदृक् तेभ्यः पूर्वमन्यत् स्थितमासीत्। न खलु पुरातनमर्वाचीनाः सम्यक् जानीयुरिति भावः ॥ ५३

उपसंहरतिस्म — तस्मादिति। उक्तमहिम-प्रचयाद्धेतोः कीदृशं तमित्युक्तं ॐ तत्सदिति। प्रणवादीनां मन्त्रपदवाच्यमित्यर्थः। ॐ मित्येतद्

यजेदित्यों तत्सदिति ॥ ५४ ( वि ५१ )

इत्यथर्वोपनिषदि श्रीगोपालतापन्यां पूर्व्वविभागः समाप्तः ॥ ❀

---

## उत्तरः विभागः ।

एकदा हि व्रजस्त्रियः सकामाः शर्व्वरीमुषित्वा सर्व्वे-

---

भजेत् व्यजनादिभिः परिचरेत् । यजेत् पाद्यादिभिः पूजयेत् ॥ ५१

इति पूर्व्वविभागः संपूर्णः ॥ ० ॥ ० ॥

---

## उत्तर-विभागः ।

पूर्व्वविभागे श्रीगोपालस्य मन्त्रमुपासनादिकञ्च निरूप्योत्तरविभागे मन्त्रवाच्ययो गोपीजनगोपालयो र्लीला-माधुर्य्यैश्वर्य्यधामादि-निरूपण-मुपक्रमते । एकदेति—सकामा निष्प्रत्यूहरासविलासादिसिद्धकामाः

---

ब्रह्मणो नेदिष्टं नाम। तत्त्वमसि सदेव सौम्येति श्रुतयः। इति शब्द उपदेश-समासौ ॥ ५४

इति श्रीगोपालपूर्व्वतापनी व्याख्याता ॥ ❀ ॥ ❀ ॥

---

नित्यं निवसतु हृदये चैतन्यात्मा मुरारि र्नः ।
निरवद्यो निर्वृतिमान् गजपतिरनुकम्पया यस्य ॥ ❀ ॥

त्रिपादूर्ध्वंगते पार्षदभेदाद् भेदेनैव विभाते कृष्णलोके कृष्णः स्वय-मस्तीति निर्णीयते। तत्र द्वारकायां मथुरायां च राजलीलः श्रीगोकुले तु गोपलीलः ; स च साधिष्ठानः समन्त्रः सपार्षदश्च मुनीन् प्रति हैरण्येनोपदिष्टः पूर्व्वतापन्यां। स च कृष्णः कदाचित् प्रपञ्चे विहर्त्तुमना स्वतत्राधिष्ठानानि पार्षदां श्चाविर्भाव्य तमन्वयात्। तत्र मथुरा-गोकुलाख्येऽधिष्ठाने पूर्व्ववर्णितं



श्वरं गोपालं कृष्णं हि ता ऊचिरे ॥ १

उवाच ताः 'कृष्णः * ॥ २ ॥ अनु'कस्मै ब्राह्मणाय 'भक्ष्यं' ‡ दातव्यं भवति ? ३ ॥

---

यद्वा कामेन प्रेम्ना सह वर्त्तमानाः, 'प्रेमैव गोपरामाणां काम इत्यगमत् प्रथामिति' तन्त्रोक्तेः। शर्व्वरीमुषित्वा कृष्णेन सह रासविलासादिभि र्यापयित्वा तदन्ते सर्व्वेश्वरं श्लेषेण सर्व्वासां गोपीनां संभोक्तृत्वेन ईश्वरं। गवां स्वस्वसर्व्वेन्द्रियानां सुखदत्वेन पालकं ॥ १

उवाच ता इत्यनन्तरं कृष्णोऽपीति शेषः। ऊचिरे उवाचेत्य-नयो रस्मिन्ग्रन्थे अधिकारो ज्ञेयः ॥ २

ताः किमूचिरे, कृष्णो वा किमुवाचेत्यपेक्षायामाह—कृष्णमनु-लक्ष्यीकृत्य प्रथमं ता ऊचिरे इति पूर्व्वेणान्वयः। भक्ष्यं भिक्षा-समूहः ऐच्छिकं चतर्विधभोजनमिति भावः। त्वया सह रासविलासादि-सिद्ध्यर्थमिति प्रयोजनं लज्जया नोक्तं ॥ ३

---

तमेव विधान्तरेणोपदेष्टुमियमुत्तरतापनी प्रवृत्ता। तस्य कान्ताजनैः सार्द्धं लीलां तावदतिमनोज्ञामाह—एकदा हीति। व्रजस्त्रियः श्रीराधिका-प्रधाना वल्लभ्यः सकामाः कृष्णैकाभिलाषिण्यः शर्व्वरीं रात्रिमुषित्वा तेन सह क्रीड़ित्वा रासविलासेन तमानन्द्येत्यर्थः। प्रभाते ताः सर्व्वेश्वरं सर्व्वासां नायकं भगवन्त-मूचिरे पप्रच्छुः ॥ १

ताः प्रति किं पृच्छ्येत्युवाच कृष्णः ॥ २ ॥ तासां वाक्यमन्वेति कस्मै अनुदातव्यमित्यन्वयः। अनु सहिताभि रस्माभिः कस्मै देयमित्यर्थः। अनु हीने सहार्थेचेति विश्वः। यस्मै भक्ष्ये दत्तेऽस्मदभीष्टं सिद्ध्येत स ब्राह्मणः सूचनीय इत्यर्थः ॥ ३

---

* कृष्णमनु। ‡ भैक्ष्यं।

दुर्वाससेति ॥ ४ ॥ कथं यास्यामो ऽतीर्त्वा जलं यमुनाया यतः श्रेयो भविष्यति ॥ ५ ॥ कृष्णेति ब्रह्मचारी-त्युक्त्वा मार्गं वो दास्यति ॥ ६

यं मां स्मृत्वाऽगाधा गाधाभवति, यं मां स्मृत्वाऽपूतः पूतोभवति, यं मां स्मृत्वाऽव्रती व्रतीभवति, यं मां स्मृत्वा

---

कृष्ण उवाचेति—दुर्वाससे इति सन्धिरार्षः ॥ ४ ॥

ता ऊचिरे—कथमिति ॥ ५ ॥

कृष्ण उवाच—कृष्णेति ब्रह्मचारीति क्रमेणोक्त्वा स्थितानां इत्यर्थः । कृष्णेति सन्धि श्छान्दसः । दास्यति यमुनेति शेषः ॥ ६

यं मां स्मृत्वा स्थितानां भवतीनां अगाधापि यमुना गाधा जानु-दघ्नजला भवति । न केवलमियानेव प्रभावो मत्स्मरणस्य यतः अपूत

---

तां प्रति कृष्णवाक्यं—दुर्वाससेति । सन्धि श्छान्दसः, दुर्वाशस इति वाच्ये ह्रस्वत्वदन्त्यसकारत्वे छान्दसे । दुर्वाससे भोजनदापनस्यायं भावः—ब्रह्मसनकादिनारदोपदिष्टया मदुपनिषदा मद्याथात्म्यं विद्वान् मद्भक्तोऽतो मद्व्रजोपान्तनिवासि-निस्पृहत्वादतितपस्वित्वाच्चासामपि प्रत्येतव्यः स वक्ष्यत्यभीष्टमिति ।। ४

यमुनामुच्छलन्तीं वीक्ष्य ताः ऊचुः—कथमिति । अतीर्त्वेत्युक्ते स्तस्य परपारे स्थिति र्घोतिता ॥ ५ ॥ ताः प्रति कृष्णवाक्यं—कृष्णेति नामा यः स ब्रह्मचारीति यमुनां प्रत्युक्त्वा स्थिताभ्यो वः सा मार्गं दास्यतीति ॥ ६

कुत एतत्तत्राह—यमित्यादि । यं मां ब्रह्मचारिणं स्मृत्वा अगाधा यमुना गाधा भवति । अगाधमतलस्पर्शमित्यमरः । न चैतदेव फलमन्यच्च महदस्तीत्याह—अपूतो हैत्यादिः पूतो विमुक्तो भवति । अव्रती व्रतहीनः व्रती भवति व्रतफलानि विन्दति । सकामः पुत्रपशु—हिरण्यादीच्छु र्निष्काम



सकामो निष्कामो भवति, यं मां स्मृत्वाऽ'श्रोत्रीयः श्रोत्रीयो'ॐ भवति ॥ ७

श्रुत्वा तद् वाचं हि वै स्मृत्वा रौद्रं तद्वाक्येन तीर्त्वा तत् सौर्यां हि वै गत्वाश्रमं पुण्यतमं हि नत्वा मुनिं श्रेष्ठतमं हि वै रौद्रञ्चेति ( वि ८ ) दत्त्वा ऽस्मै ब्राह्मणाय क्षीरमयं घृतमयं मिष्टतमं 'ह वै' † ॥ ८ ॥ तुष्टः स त्वाशुक्त्वा

---

इत्यादि । निष्कामो वेदोऽपि सकामः काम-पीड़ितो भवति ; अश्रोत्री -त्युपलक्षणं । अनीन्द्रियोऽपीन्द्रियवान् भवतीत्यर्थः । यथा मुक्तः श्रीशुकः ॥ ७

तद्वाक्येन तीर्त्वेति 'हे कालिन्दि ! यदि कृष्णो ब्रह्मचारी,

---

स्तर्हिदिच्छाशून्यो भवति । मत्कामनया मदन्यकामनायाः प्रणाशादित्यर्थः । अश्रोत्रीयोऽनधीतवेदः श्रोत्रीयोऽधीतवेदो भवति । मत्स्मरणप्रभावेण-तस्मिन् ब्रह्मणीव वेदराशेः स्फुरणादिति भावः । निष्कामः सकामो भवत्यश्रोत्री श्रोत्रीभवतीति केचित् पठन्ति ; तदर्थस्तु निष्काम आत्मारामोऽपि सकामो मद्रूपसस्पृहो भवति, यथा दण्डकारण्य-निवासी मुनिव्यूहः । अश्रोत्री श्रोत्रहीन स्तर्वादिः श्रोत्री श्रोत्रवान् भवति, वेणुनादेन तस्यापि पुलक-स्मरणादिति ॥ ७

अथैवं भगवद्वाक्यं निशम्य सस्मितानां विस्मितानां च तासां तद्वाक्यानुसारिणीं चेष्टामाह—श्रुत्वेति । महिम-बोधिकां भगवद्वाचं श्रुत्वा तद्वीक्षणे सोत्साहा स्ता रौद्रं रुद्रांशं दुर्वाससं द्रष्टव्यत्वेन स्मृत्वा तद्वाक्येन कृष्ण श्चेद् ब्रह्मचारी तर्हि मार्गं नो देहीति तासां वचनेन दत्तमार्गां गुल्फ-दघ्नजलां तत्सौर्यां तां सूर्यतनयां यमुनां तीर्त्वा पुण्यतममाश्रमं गत्वा श्रेष्ठ-

ॐ श्रोत्री श्रोत्री । † वि पुस्तके नास्ति ।

हित्वाशिषं प्रयोज्यान्वाज्ञां त्वदात् ॥ ९ ॥ कथं यास्यामो-ऽतीर्त्त्वा सौर्य्यं ॥ १० ॥ स होवाच—मुनिं दुर्वाशिनं

---

तदा मार्गं देहीत्युक्तिमात्रेणैव तत्तदा तीर्त्त्वा सौर्य्यां यमुनां रौद्रं रुद्रांशं दुर्वाससं नत्वा तस्थुरिति शेषः ॥ ८

स दुर्वासाः सत्वः सत्त्वं बुद्धि स्तद्युक्तः अशंश्चायच। श्रीकृष्णप्रेयस्य एताः मम महाभाग्येनैव स्वहस्तपक्कं विविधान्नं मह्य अदुः, तदहं भुञ्जे इति विचारपर इत्यर्थः। तुष्टः सन् भुक्त्वा तत्रापि किमपि न त्यक्त्वा इत्यर्थः। हि तु इति द्वयं पादपूरणे इति वा। आशिषं प्रयोज्य त्वदीयहस्तपक्कमन्नं भुञ्जानो दीर्घायु र्वलारोग्यवान् भवतु, त्वमसृतहस्ता भवेति वरं दत्त्वा अन्वाज्ञां गृहं गन्तुं आज्ञां अनु पश्चाददात् ॥ ९

सौर्य्यं यमुनां केन प्रकारेण तीर्त्त्वा यामः, तस्याः संप्रत्यगाध-जलत्वादिति भावः ॥ १०

---

तमं तं वै रौद्रं मुनिं नत्वास्मै ब्राह्मणाय घृतमयाद्यन्नं दत्त्वा तूष्णीं तस्थुरिति शेषः ॥ ८

स तु दुर्वासा स्तदन्नमाभुक्त्वा प्रीतिभरात् साकल्येनोपभुज्येत्यर्थः। ल्यवभाव श्छान्दसः। हित्वा उच्छिष्टपात्रं परित्यज्य आचाम्य धौतपाणिपाद स्तुष्टोऽतिप्रसन्नः संस्तासु मिष्टहस्तत्व-कान्तसौभाग्यभाजनत्वादि-रूपामाशिषं प्रयुज्य निलय-गमनाय अन्वाज्ञां त्वदात्। न तु रुक्मिण्यादिष्विव किञ्चित् कौटिल्यमाचचारेति महिमातिशय स्तासां व्यङ्ग्यः ॥ ९

यमुनामुच्छलन्तीं वीक्ष्य ता मुनिं प्रत्यूचुः—कथमिति ॥ १०

स ह दुर्वासा स्ता उवाच—दुर्वासिनं दूर्वारस-भोजिनं विरक्तं मां मुनिं स्मृत्वा स्थिताभ्यो वो युष्मभ्यं सा मार्गं दास्यतीति। अत्र दूर्वाशिनमिति वक्तव्ये ह्रस्वोकारत्वं छान्दसं ॥ ११



मां स्मृत्वा मार्गं वो दास्यतीति ॥ ११ ॥

तासां मध्ये श्रेष्ठा गान्धर्वीत्युवाच। तं ह वै ताभि रेवं विचार्य्य ॥ १२ ॥ कथं कृष्णो ब्रह्मचारी कथं दुर्वाशनो मुनिः ? ॥ १३ ॥ तां हि मुख्यां विधाय पूर्वमनु कृत्वा तूष्णी-मासुः ॥ १४ (वि १२)

शब्दवानाकाशः शब्दाकाशाभ्यां भिन्न स्तस्मिन्ना-

---

स दुर्वासा ह स्पष्टमुवाच दूर्वाशिनं दुर्वामात्रभोजिनं मां स्मृत्वा इत्यर्थः। दूर्वादीर्घस्य ह्रस्वत्वं, तालव्यस्य दन्त्यत्वं पृषोदरादित्वात् ॥ ११

ताभि र्गोपीभिः सह एवं विचार्य्येति। अस्यातिहर्षेण साक्षाद् दृष्टः पायसादिभोगः, कृष्णस्यास्मत् सम्भोगश्च। तत् कथमेतयो दूर्वाभक्षित्वं ब्रह्मचर्य्यत्वमिति। तस्मादयमेव तत्त्वं प्रष्टव्य इत्यत आह—कथमिति ॥ १२

दुर्वासा आह—शब्देति। यः शब्दाकाशाभ्यां भिन्नः सह्यात्मा-

---

एवं मुनिनोक्ते तासां मध्ये राजपुत्रीत्वान्निखिल-लक्ष्म्यंशिनीत्वाच्च श्रेष्ठा श्रीराधा देवी कदाचिदंशेन गन्धर्वकुले जातत्वाद् गान्धर्वी ज्ञाततत्त्वापि तत्त्वश्रवणास्वादाय ताभिः स्वसहचरीभिः सार्द्धमेवं विचार्य्य तं ह वै मुनि-मुवाच ॥ १२

यद् विचार्य्य मुनिं प्रत्युक्तं तदाह—कथमिति। अस्मास्वत्यासक्तः कृष्णः कथं ब्रह्मचारी, विप्रसहस्रभोक्तव्यान्यन्नानि एक एव भुक्तवान् मुनिः कथं दुर्वासन इति ॥ १३

अन्याः कथमासं स्तत्राह—तां हीति। तां मुख्यां गान्धर्वीं प्रश्न-कर्त्रीं विधाय दुर्वाससं पूर्वमनु कृत्वा पूर्ववर्त्तिनं कृत्वा तूष्णीं स्थिता इत्यर्थः ॥

शब्दवानित्यतः पूर्वं स होवाचेत्युह्यं। परेशस्य कृष्णस्य ब्रह्मचारित्वे

काशे तिष्ठति, स ह्याकाश स्तं न वेद स ह्यात्माहं कथं भोक्ता भवामि ॥ १५ ( वि १३ ) स्पर्शवान् वायुः स्पशवायुभ्यां भिन्नस्तस्मिन् वायौ तिष्ठति, वायु र्न वेद तं स ह्यात्माहं कथं भोक्ताभवामि ॥ १६ ( वि १४ ) रूपवदिदं हि तेजो रूपाग्निभ्यां भिन्न स्तस्मिन्नग्नौ तिष्ठत्यग्नि र्न वेद तं स ह्यात्माहं कथं भोक्ता भवामि ॥ १७ ( वि १५ ) रसवत्य आपः रसाद्भ्यो भिन्न स्तास्वप्सु तिष्ठति, तं ह्यापो न विदुः स ह्यात्मा कथं भोक्ता भवामि ॥ १८ ( वि १६ ) गन्धवतीयं भूमि र्गन्धभूमिभ्यां भिन्न स्तस्यां भूमौ तिष्ठति, भूमि र्न वेद तं, स ह्यात्माहं कथं भोक्ता भवामि ॥ १९ ( वि १७ )

---

हमित्यन्वयः। इति स्वस्य तदनावेशेन श्रोत्रेन्द्रियभोगो निषेद्धः। एवं स्पर्शवानित्यादिषु ज्ञेयं ॥ १३-१७ ॥

---

तदंशस्य मे जीवस्य दुर्वासित्वे च सन्दिहानैवैषा राधा पृच्छति, तदनयो रुत्तरं स्वरूप-शोधनेनैव देयमिति भावेन स दुर्वासा उवाच—शब्देति। शब्द-गुणकः खल्वाकाशो भवति। शब्दाकाशाभ्यामचेतनाभ्यां भिन्नः संसार-दशायामारम्भकतया देहस्थे तस्मिन् शब्दवत्याकाशे तिष्ठति। इह य इति पूरणीयं। स आधारभूत आकाश स्तमाधेयं न वेद स हि तद्विलक्षण आत्माहं कथं भोक्ता भवामीति शुद्धस्य स्वस्य तदनावेशात् श्रोत्रेण शब्दभोगो निषिद्धः। अत्र प्राकृतदेहेन्द्रियप्राणाविष्टस्य संसारावस्थस्य जीवस्य भौतिकशब्दादि-भोक्तृत्वं, न तु शुद्धस्येति तदपेक्षयैव तद्भोगनिषेधः। स्वपरात्मसुखानुभव-लक्षणो भोग स्तु शुद्धस्यैवेति स्फुटमग्रे भावि। एवं स्पर्शवानित्यादिषु च व्याख्यातव्यं ॥ १८-१९ ॥



इदं हि मन स्तेष्वेव हि मनुते तानिदं गृह्णाति ॥ २० यत्र सर्व्वमात्मैवाभूत्तत्र वा कुत्र मनुते क वा गच्छतीति स ह्यात्माहं कथं भोक्ता भवामि ॥ २१ ( वि १८ )

---

इदं मन स्तेषु श्रोत्रादिष्वधितिष्ठत् सत् मनुते अनुभवति। अनुभवमेव व्याचष्टे—तान् शब्दादीन् विषयान्, तेषां स्वस्य शोक-मोहादिकं मनो गृह्णाति। अत्र मनसि सर्वमनुभूयमानं शब्दादिकं आत्मैवाभूत्। अत्र मनसि वर्त्तमानोऽयमात्मा कुत्र कस्यामवस्थायां वा मनुते स्वमनुभवति क वा कस्यां दशायां गच्छति संप्राप्नोति मनस्तं न वेदेति शेषः। स ह्यात्माहं इति पूर्ववदन्वयः। कुत्र मनुते इति सुषुप्तौ, कुत्र वा गच्छतीति समाधौ ॥ १८

---

रागादीनां भोक्ताहं रागश्रवणादीन् करोमीति प्रतीतिः कथं? तत्रोवाच—इदं हीति। धर्मभूतज्ञानारूढमिदं मन स्तेषु श्रोत्रादिष्वधिष्ठातृभावेन स्थितं सदेवं श्रोत्रादिप्रणाल्या तान् शब्दादीन् स्वाधिष्ठातु र्जीवस्य गृह्णाति, तदा मनसो ऽप्यधिष्ठाता स जीवो रागादीनां भोक्ता ऽहमिति मनुते—इति प्राकृत-देहाद्युपेतस्य भौतिकरागादिभोक्तृत्वमुक्तं ॥ २०

मोक्षावस्थस्य तु स्वपरात्मानन्दानुभव-लक्षणो भोगः स्वसंकल्पानुयायि परात्मसंकल्पप्रवृत्तपराख्यतत्तत्स्वरूपशक्तिसिद्धेन पार्षद-विग्रहेणास्य जीवस्य धर्मभूतज्ञानारूढेन भवतीत्युवाच यत्रेति—यत्र मोक्षदशायामस्य सर्वं देहेन्द्रि-यादिकमात्मैव परमात्मैवाभूत, तत्तद्दशायां कुत्र शब्दादिके भोग्ये भोग्यत्वमयं मनुते, क वा भोग्ये तस्मिन् भोक्तृतां गच्छतीति तदा तस्याभावादेव तस्मिं स्तत्त्वं न मनुते, तत्तां च न गच्छतीत्यर्थः। किन्त्वात्मानमेव भोग्यं मनुते, तस्मिन् भोक्तृतां यातीति परेशानुग्रहान्मुक्तस्य विग्रह-लाभ इति कठाः पठन्ति—'यमेवैष वृणुते तेन लभ्य स्तस्यैव आत्मा विवृणुते तनुं स्वामिति'। परात्म-कल्पात् पूर्वसिद्धः संव्योमशोभाभूतः पार्षदविग्रहो विभाति तेनैकत्रमेन विमुक्तस्य

अयं हि कृष्णो यो वो हि प्रेष्ठः शरीरद्वय-कारणं भवति ॥ २२ (वि १९)

द्वौ सुपर्णौ भवतो ब्रह्मणोंऽशभूत स्तथेतरो भोक्ता भवति, अन्यो हि साक्षी भवति ; भोक्ताऽभोक्तारौ वृक्षधर्मे

तेनाहं जीवन्मुक्त आत्मारामः प्रारब्धवशात् भोगं भुञ्जानोऽप्यभिमानाभावाद् भोक्ता न भवामि । अतो दुर्वा पायसादि र्वा न मया वस्तुतो भोज्यत इत्युक्तं । इदानीं कृष्णः कथं ब्रह्मचारीत्यस्य उत्तरमाह—अयं हीति । शरीरयोः स्थूल-सूक्ष्मयोः द्वयस्य कारणं स्वांशद्वारेण स्रष्टा ॥ १९

द्वौ सुपर्णौ पक्षिणो जीवात्म-परमात्मानौ भवतः, तयो र्मध्ये सायुज्यं भवतीति तात्पिड्नो धायते । अश्व इव रोमाणि विधूय पापं शरीरमकृत-कृतात्मा । ब्रह्मलोकमभिसंभवानीति । अत उक्तं श्रीभागवते—'वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्त्तयः । येऽनिमित्त-निमित्तेन धर्म्मेणाराधयन् हरिमिति (३।१५।१४) । एवं च सति प्राकृतदेहाद्यावेश-शून्यः सर्पकञ्चुक-वदावेशेन तद्धानः स आत्माहं भौतिकान्नादेः कथं भोक्ता भवामि, न भवामीत्यर्थः । युष्माभि र्दत्तमन्नादिकं तु न भौतिकं, किन्तु रसात्मकमेव, तदश्नतो मे संव्योम-पार्षदस्येव किञ्चिद् वै कृतं, दूर्वारसपानं तु तपस्वितानुकरणमिति भावः ॥ २१

एवं स्वस्य जीवन्मुक्तस्य देहानावेशाद्देहधर्मैः क्षुत्पिपासादिभिरनाक्रान्तत्वाद् दूर्वारसाशित्वं तपस्वितानुकरणमित्युक्तं । अथ कृष्णस्य सर्व्वेश्वरस्यानन्द--पूर्णत्वेनानन्दहेतु--विषयतृष्णा--विरहाद् ब्रह्मचारित्वमिति सूचयितुमुवाच—अयं हीति । शरीरद्वयस्य स्थूलसूक्ष्मस्य, कृष्ण-श ब्दस्या--न्यार्थत्वं व्यावर्त्तयितुमाह—यो वो हि प्रेष्ठ इति । तथा च शरीरद्वयकर्त्तु र्न शरीर-धर्म्मसंबन्ध इति ॥ २२



तिष्ठतः पूर्वो हि भोक्ता भवति, तथेतरोऽभोक्ता * भवति ॥ २३ (वि २०)

यत्र विद्याविद्ये न विदामो विद्याविद्याभ्यां भिन्नो

ब्रह्मणोऽशभूतः 'ममैवांशो जीवलोके जीवभूतः' इति गीतोक्तेः । इतरो निकृष्टः जीवात्मा सम्भोक्ता, अन्यः प्रकृष्टः परमात्मा साक्षी सर्वदर्शी, न तु भोक्ता । एवं भोक्ताभोक्तारौ जीवात्म-परमात्मानौ वृक्षधर्मे शरीरे तिष्ठतः । भोक्ताभोक्ताराविति छान्दसः ॥ २०

श्रीकृष्णस्य परमात्मनोऽप्यंशित्वात् प्रकृष्ट इत्याह—यत्र श्रीकृष्णे विद्याविद्ये मायावृत्ती न विदामः न विद्मः । यतो विद्याविद्याभ्यां

ननु पुरुषावतारस्य गर्भोदकशयादेः शरीरकर्त्तृत्वं पठ्यते, न तु कृष्णस्येति चेत्तत्रोवाच—द्वाविति । द्वा सुपर्णा पक्षिणौ भवतः, तौ कावित्युवाच—ब्रह्मणो बृहद्गुणकस्य स्वयं भगवतो पुरुषश्रेष्ठस्य कृष्णस्य स च स चांशभूतः, तत्रेतर एको विभिन्नांशो जीवो भोक्ता विषयरसगृध्नु स भवति, तस्मादन्यः स्वांशो गर्भोदकशयादिः पुरुषावतार स्त्वानन्दपूर्णः साक्षी भवतीति । न तु जीववत्तद्गृध्नुरित्यर्थः । 'स्वांश श्चाथ विभिन्नांश इति द्वेधांश इष्यते । अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थिति । तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् । विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित् सामर्थ्यमात्रयुगिति' स्मृतेः । भोक्तेति अत आत्वं छान्दसं । वृक्षधर्मे देहे वृक्षस्य यो धर्मः छेद्यत्वं तद् यस्मिन् ज्ञानहेतुकं विद्यते । उक्तमेव दृढ़तायै पुनराह—पूर्वो हीति ॥ २३

संकर्षणादि व्यूहत्रयावताराः कारणोदशायाद्य स्त्रयः प्रकृति-तत्कार्य्य-नियामकतया तत्स्पर्शिणः । वासुदेवस्तु चतुर्थो व्यूहः तदस्पर्शीति नारायणीयादौ वि स्फुटं । ततश्च गर्भोदकशयादे स्तदंशस्याप्यानन्दपूर्णत्वाद्

* कृष्णो भवति ।

विद्यामयो हि यः स कथं विषयी भवति इति ॥२४ (वि २१)

यो ह वै कामेन कामान् कामयते स कामी भवति ॥ २५ ( वि २२ )

यो ह वै त्वकामेन कामान् कामयते सोऽकामी

---

भिन्नः मायातीत इत्यर्थः। हि यतो विद्यामयः विद्यास्वरूपभूता चिच्छक्तिः तन्मयः ॥ २१

कामेन काममयेन मनसा स ब्रह्मादिरपि कामी ॥ २२

अकामः कामतुल्यः प्रेमा तन्मयेन मनसा स कृष्णोऽकामीत्यनौ

---

भौतिक-विषय-रसाभोक्तृत्वे सति तदंशिनः कृष्णस्य तु तदभोक्तृत्व-रूपं ब्रह्मचारित्वमसन्देहमिति भावेनोवाच—यत्रेति। यत्र स्वयं भगवति युष्मत्प्रेष्ठे कृष्णे विद्याऽविद्ये मायावृत्ती न विदामो न जानीमो वयं, ते यस्य साक्षात्त्रियत्वेन भवत इत्यर्थः। अतो विद्याविद्याभ्यां भिन्न तदस्पर्शी चिन्मय श्चिदेकरसः कृष्णः स कथं विषयी भौतिकशब्दादिरसगृध्नु र्भवति, न भवतीत्यर्थः ॥ २४

नन्वस्माभि स्तत्कान्ताभि स्तस्य विषयित्वमनुभूतं, कथं मुनिना तदपनेयं, तत्रोवाच—यो हेति। यो देवमानवादिः प्राणिनिकरः कामेन शक्रभृत्येन स्मरेण विद्धमर्मा कामान् तरुणीशब्दस्पर्शादीन् विषयान् कामयते भोक्तुं वाञ्छति स कामी कथ्यते ॥ २५

यो हेति—तु भिन्नोपक्रमार्थः। 'तु स्याद् भेदेऽवधारणे' इत्यमरः। कृष्णस्तु लोक-विलक्षण इत्यर्थः। यः कृष्णोऽकामेन काम-सदृशेन युष्माकं प्रेम्णानुरञ्जितः सन् कामान् शब्दस्पर्शादीन् कामयते, स तादृगकामी कथ्यते, ब्रह्मचारी कथ्यते। एतदुक्तं भवति—'आनन्दचिन्मयरसे'त्यादे 'र्वंशब्यो मे मदात्मिका' इत्यन्तश्च वाक्यात् 'व्रजस्त्रीत्यादिकाद् वक्ष्यमाणमद्वाक्यच्च स्वरूप-



भवति ॥ २६ ( वि २३ )

जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योऽयं योऽसौ सौर्ये तिष्ठति, योऽसौ गोषु तिष्ठति, योऽसौ गोपान् पाल-

---

युष्मत्संभोक्तृत्वेऽपि स ब्रह्मचार्य्येव भवतीत्यर्थः ॥ २३

ननु यद्ययं विद्याविद्याभ्यां भिन्न स्तदा कथमस्य जन्मबाल्याद्या मायिक्योऽवस्था दृश्यन्ते, तत्राह जन्मेति। जीववद्धातु-सम्बन्धं जन्म नैवास्ति, किन्त्वाविर्भाव एवास्ति। जरा तु सर्वथैव नास्ति। बाल्य-पौगण्ड-कैशोराणि तु अप्राकृतान्येव सन्तीति भावः। स्थाणुः सर्व-काल एव स्थितिमान् इति जरेवान्तिमावस्थापि वारिता। तत्र हेतुः—

---

शक्तिभूताभि र्युष्माभिः स्वात्मनि कृष्णे तत्सुखकामनया स्वाङ्गान्यर्प्यन्ते। स च स्वात्मभूतासु युष्मास्वनुरक्त स्तानि भजतीति मिथः स्वारामत्वं मया विदितमिति ब्रह्मचारित्वं कृष्णस्य; भवतीनां च निःसंशयं वः कृष्णैक-सुखैषुत्वं तु 'यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु। तेनाटवीमटसि तद् व्यथते न किंस्वित् कूर्पादिभि र्भ्रमति धी र्भवदायुषां न इति ( भाग १०।३१।१६ ) युष्मद्वाक्यात्। 'निजाङ्गमपि या गोप्यो ममेति समुपासते।' इत्यर्जुनं प्रति कृष्णवाक्याच्च। ब्रह्मणि स्वस्वरूप-शक्तिभूते प्रेयसी-व्यूहे चरितुं शीलमस्येति। ब्रह्मणि स्वांशिनि कृष्णे चरितुं शीलमासामिति च व्युत्पत्ति-द्वयं बोध्यं। तस्मात् कामक्रीडासदृशो ऽयमात्मारामता-लक्षणो विहारो विशुद्ध इति ज्ञाततत्त्वाया स्तव तदनवद-स्यादार्थेयं जीप्सेति। 'नेह नानास्ति किञ्चनेत्या'दिश्रुतितो निर्भेदेऽपि परमात्मवस्तुनि तरुणी-पुरुषोत्तमभाव-स्वाङ्गदानादानरूप-भेदकार्य्योदयो विशेषादेव, 'सत्ता सती कालः सर्वदास्तीत्यादि'वद् बोध्यः ॥ २६

अथ तस्य गोपालस्य पूर्वोक्त-मन्त्रार्थत्वं प्रतिपादयन् सर्वोत्तमत्वमाकथयत्—जन्मेति। जन्मजराभ्यां भिन्नोऽच्छेद्य इत्युक्ते यः षड्भाव विकार-वर्जितो

यति, योऽसौ गोपेषु तिष्ठति, योऽसौ सर्वेषु वेदेषु तिष्ठति, योऽसौ सर्वैर्वेदैर्गीयते, योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति, स वो हि स्वामी भवति ॥ २७ ( वि २४ )

सा होवाच गान्धर्वी—कथं वाऽस्मासु जातोऽसौ

---

अच्छेद्यः कालादिभिः । सौर्य्ये सूर्य्यमण्डले सौर्य्यां यमुनायाः जले च विहारार्थं गोषु तच्चारणार्थं गोपेषु तैः सह खेलनार्थं वेदेषु तदुक्त-प्रामाण्यार्थं भूतेषु तत्तत्कर्मप्रवर्त्तनफलदानार्थं स एव कृष्णः स्वामी युष्मत्-सम्भोगाधिकारी, 'स्वामिन्नैश्वर्य्ये' इति पाणिनि-स्मरणात् । ब्राह्मण-स्वामिकेयं भूमिरितिवत् । न च स्वामिनो देवृ-देवरावित्युक्तेः स्वामिशब्दस्य परिणेतर्य्यपि शक्तेः स वः परिणेता भवतीति व्याख्येयं । तदानीं गोकुले श्रीकृष्णस्योपनयनाभावादेव परिणये नाधिकारात् । न च दन्तवक्रवधान्ते श्रीकृष्णो व्रजमेत्य ताः परिणेष्यतीति वाच्यं, तयाभिप्राये सति स वो हि स्वामी भविष्यती-त्युक्तिः स्यात् । तस्मादुक्तं व्याख्यातमेव सङ्गच्छते ॥ २४

---

नित्य इत्युक्तं । अतः स्थाणुः स्थिरस्वरूप-गुणविभूतिक इत्यर्थः । योऽसौ सौर्य्ये सूर्य्यमण्डले तदन्तर्यामी हिरण्मयः पुरुषो भवति, पाप्मभ्य उद्गत-त्वात्तन्नामा तथात्वेनोपासीनस्य निखिलानां पाप्मनां विनाशकृदिति कृष्ण-शब्दार्थत्वमुक्तं । अथ गोविन्द-शब्दार्थत्वमाह—योऽसौ गोष्वित्यादिना विदधाति विशेषेण पालयति धारयति चेति गोभूमिवेदविदितत्वाभिधानाद् गोविन्द-शब्दार्थत्वं व्यक्तं । अथ तृतीयशब्दार्थत्वमाह—स वो हीति । हिरवधारणे । स एव वो युष्माकं गोपीनां स्वामी वल्लभो नित्यकान्त इत्यर्थः । 'हि हेताववधारणे' इत्यमरः । सौर्य्ये तिष्ठतीत्यत्र सौर्य्यां यमुनाया अदूरभवे प्रदेशे तदुभयतटरूपे वृन्दावनादौ तिष्ठतीत्यर्थं केचिदाहुः । संकाशादित्वात् ण्यः । अतः सूर्यासुत इति भीष्म स्तवनाम पपाठ ॥ २७



गोपालः ? कथं वा ज्ञातोऽसौ त्वया मुने कृष्णः ? को वाऽस्य मन्त्रः ? किं वाऽस्य स्थानं ? कथं वा देवक्यां जातः ? को वाऽस्य ज्यायान् रामो भवति ? कीदृशी पूजाऽस्य गोपालस्य भवति ? साक्षात् प्रकृतिपरोऽयमात्मा गोपालः कथं त्ववतीर्णो भूम्यां हि वै ? २८ ( वि २५ )

---

सा गान्धर्वी श्रीराधा ॥ २५

---

एवं स्वाभीष्टं श्रुत्वातिप्रीता गान्धर्वी श्रीराधा तद्विशेषान् पप्रच्छे-त्याह—सेति । 'कथं प्रश्ने संभ्रमे च प्रकाशार्थे च सम्भवे । विमर्शे च कथं स्मृतमिति' विश्वः । अस्मासु मनुष्यजातिषु मध्ये कथं जातः—एतद् विमर्शनीयमित्यर्थः । त्वयाऽसौ वर्णित-लक्षणः कस्माद् गुरोरवगत इत्यर्थः । देवक्यां कथं जातः, तस्यां जन्मना तस्य कोऽतिशय इत्यर्थः । देवकीशब्दो-ऽत्र नन्द-पत्नीं वसुदेव-पत्नीं चाह । 'द्वे नाम्नी नन्दभार्य्याया यशोदा देवकीति च' इत्यादिपुराणवचनात् प्रसिद्धेश्च । उभयत्र कृष्णस्य जन्मेत्याह श्रीशुकः । 'निशीथे तम उद्भूते जायमाने जनार्दने । देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः' ( भाग १०।३।८ ) इति । अत्र देवक्यामिति देहलीप्रदीपन्यायेनोभयत्रान्वेति—'यशोदा नन्दपत्नी च जातं परमबुध्यत । न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृति' रिति ( भाग १०।३।५३ )। न तद्वेदेति क्वचित् पाठः । वसुदेव-पत्नीव नन्दपत्नी च यशोदा परं परेशमेव स्वगर्भाज्जातमबुध्यत । तस्य वसुदेवागमस्य लिङ्गं चिह्नं नाबुध्यत । तद्वसुदेवागमनं न वेदेति वा, यतः परीत्यादि । आदि पुराणे नारदश्चैवमाह—'नन्दगोप गृहे पुत्रो यशोदागर्भसंभव' इति । इत्थं च यशोदा—नन्दात्मजत्ववचांसि सूपपन्नानि । उपगुह्यात्मजामित्यादिवद् गौणात्मजत्व-शङ्का व्युदस्ता । कंसं वञ्चयितुं खलु तद्वचनं देवकीसूनो यशोदा सुतत्वैक्यात्तदेकस्य मथुरादौ गतत्वादन्तरान्तरां व्रजे चागमात् । स्फुटार्थेऽपि

स होवाच तां ह वै—एको हि पूर्वं नारायणो देवः, यस्मिन् लोका ओताश्च प्रोताश्च । तस्य हृत्पद्माज्जातोऽब्जयोनिः ॥ २९ (वि २६)

तपित्वा तस्मै वरं ददौ ॥ ३० (वि २७)

स कामप्रश्नमेव वव्रे ॥ ३१ (वि २८)

---

स दुर्वासाः ॥ २६ ॥ तपित्वा आत्मानं प्रकाश्य तस्मै ब्रह्मणे ॥ २७ ॥ स ब्रह्मा कामप्रश्नं वव्रे यदहं पृच्छामि तस्योत्तरं देहीति ययाचे ॥ २८

---

न सन्देह-गन्धः । श्रीशुकस्यैवं वर्णनं च भगवद् रहस्यानुयायित्वादुपयुक्तमेव । ननु यशोदासुतत्वभावेनैवास्तु, किं गर्भसम्बन्धेनेति चेन्न—वस्तु-स्थितेरिह तथात्वात् । अन्यथा देवकीसुतत्वमपि भावेन वाच्यं स्यात् । देवक्यां जन्मनि संशयोत्पत्तौ हेतुः साक्षादिति । साक्षादात्मनः पूर्णस्य भूम्यां नृमध्ये देवक्या जन्मना किमाधिक्यमित्यर्थः । कोवास्येति—स किं शेषदेवः संकर्षणो वेति भावः ॥ २८

स हेति—एवं पृष्टः स दुर्वासा ब्रह्मादिभ्यो मयैतत् कृष्णयाथात्म्यं लब्धमिति 'कथं त्वया ज्ञातोऽसौ कृष्ण' इति प्रश्नस्योत्तर-भावेन तां गान्धर्वीं श्रीराधामुवाच । ह वै प्रसिद्धौ । एको हीति—पूर्वं सृष्टेः प्रागेको नारायणो देवः 'यो ब्रह्माणं विदधाती'त्यादि पूर्वखण्डोक्तेः । सर्वतत्त्वाश्रयत्वान्नारायणा-भिधानः कृष्णो देव आसीदित्यर्थः । तस्य नारायणत्वावबोधाय विशेषण यस्मिन्निति—तस्येति कृष्णस्य नारायणस्य, हृत्पद्मादिति आदौ हृदा संकल्पितः पश्चात्तस्य गर्भोदकशयस्य सतो नाभिपद्माज्जात इत्यर्थः ॥ २९

तपित्वा तपः कृत्वा स्थिताय तस्मै ब्रह्मणे स नारायणः कृष्णोऽति-प्रसन्नः सन् वरं ददौ वरं याचस्वेत्युवाच ॥ ३०

स ब्रह्मा कामं वाञ्छितं प्रश्नमेव वव्रे ययाचे ॥ ३१



तं हास्मै ददौ ॥ ३२ (वि २९)

स होवाचाब्जयोनिः—अवताराणां मध्ये श्रेष्ठोऽवतारः को भविता येन लोका स्तुष्टा देवा स्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात् संसाराद्भवन्ति ॥ ३३ ॥ कथं वाऽस्यावतारस्य ब्रह्मता भवति ? ३४ (वि ३०) ॥

स होवाच तं ह नारायणो देवः ॥ ३५ (वि ३१)

---

तं वरं ॥ २९ ॥ ब्रह्मता सर्वबृहत्तमता स्वयं भगवत्ता इत्यर्थः ॥

युष्माभिः सह नित्यस्थित एवासावित्यतः कथमस्मासु जातः ? इति प्रश्नोत्तरं न घटते । तथैव सर्वैरेवायं ज्ञातुमशक्यः, कथं मया ज्ञातव्य इत्यतो द्वितीयः प्रश्नोऽप्युल्लङ्घितः । किं वास्य स्थानमिति तृतीय-प्रश्नस्योत्तरं नारायण-वाक्येन जानीतेत्याह । स हेति—तमब्ज-योनिं ॥ ३१

---

तं ह कामप्रश्नमेवास्मै ब्रह्मणे वरं ददौ जनकायैव याज्ञवल्क्यो यथेच्छं पृच्छेत्याज्ञामदादित्यर्थः ॥ ३२

ततः स एवं पप्रच्छेत्याह—स हेति । हे भगवन् । तवानेकेऽवताराः प्रपञ्चगते धाम्नि भविष्यन्ति, तेषां मध्ये श्रेष्ठोऽभिव्यक्त-सर्वशक्तिकः कोऽवतारो भविता भविष्यति, श्रैष्ठ्यबोधकान् गुणान्निर्दिशति—येनेति । लोका ब्रह्मर्षयो राजर्षयश्च देवा इन्द्रादयः यं स्मृत्वा प्राणिनः सत्प्रलङ्घिनः संसारान्मुक्ता भवन्ति भविष्यन्ति ॥ ३३

कथं वेति—यो ह्यवतारः प्रमुखा श्रेष्ठो मे वर्णनीय स्तस्यावतारस्य ब्रह्मता बृहद्गुणकता स्वयं भगवत्त्व-लक्षण-श्रेष्ठता वा कथं भवति, तस्य भवत्-सापेक्ष-रूपत्वेन तल्लक्षणाव्याप्तेरिति भावः । अनन्यापेक्षिरूपत्वं खलु स्वयं भगवत्त्वं ॥ ३४

**स काम्या मेरोः शृङ्गे यथा सप्त पुर्य्यो भवन्ति, तथा निष्काम्याः सकाम्याश्च भूगोलचक्रे सप्त पुर्य्यो भवन्ति, तासां मध्ये साक्षाद् ब्रह्म गोपालपुरीति ॥ ३६ ( वि ३२ )**

---

स-काम्याः सकामानेव लोकानर्हन्तीति ताः । साक्षाद् ब्रह्मेति नात्र विवर्त्तवादस्यावकाश इति भावः ॥ ३२

---

स हेति—स नारायणो देवः कृष्ण स्तं ब्रह्माणमुवाच ॥ ३५

कथं वा अस्मासु जातः कथं वा देवक्यां जातः को वाऽस्य मन्त्र इत्येषां प्रश्नानामुत्तरं खलु जन्मजराभ्यां भिन्न इत्यादिना पूर्ववाक्येनैव तव मया दत्तमस्ति। जन्मादिभावविकार-शून्योऽसौ श्रीमद्गोकुले गोपैः गोपीभिः सार्द्धं सदैव दीव्यन्नस्ति। द्वापरावसाने कदाचित प्राच्यामिन्दुरिव पूर्ण-स्वरूपो देवक्यामाविर्भवेद्दिव्यचरित-वृन्दैः स्वसाधकभक्तानानन्दाय तै रम्बुवीचिवत । स्वानन्दवृद्धये इति तत्रार्थात । ईदृक तज्जन्मेति त्वयैव द्योतितं साक्षादित्यादि त्वद्वाक्यादेव, तथापि मन्मुखात् तच्छ्रवणमास्वाद-विशेषायेति पृच्छसीति भावः। अष्टादशार्णो मन्त्र इति तेनैवोत्तरितं। ततश्च तेषां प्रश्नानामुत्तरितत्वादवशिष्टानां स्थानादि-प्रश्नानामुत्तराणि ब्रह्म-नारायण-संवादादवगतानि मया देयानि। तत्र स्थान-प्रश्नं तावदुत्तरयति—सकाम्या इति उच्च वादविद्याविनाशित्वाच्च परमव्योमाख्यो लोको मेरु स्तस्य शृङ्गे उपरि सप्त पुर्य्योऽयोध्यादयो भवन्ति। 'मेरु र्धन्वनि शैले चेति', 'शृङ्गं विषाणे शिखरे प्रभुत्वोत्कर्ष-सानुष्विति' श्रीधरः। ता एव भूगोलचक्रे तल्लीलार्थं तदिच्छया भवन्ति। "या यथा भुवि वर्त्तन्ते पुर्य्यो भगवतः प्रियाः। ता स्तथा सन्ति वैकुण्ठे तत्तल्लीलार्थमादृता" इति स्कान्दोक्तेः। सकाम्याः सर्वभोग्योपेता स्तल्लीलारसलिप्सूनां निष्काम्याः कैवल्यमात्रलिप्सूनां भोगशून्याः, विवक्षितमाह—तासामिति। गोपालपुरी साक्षाद् ब्रह्मेत्यन्वयः। परात्मकत्वाद् व्यक्तवृहद्गुणकत्वाच्चेति भावः। अत्र मेरुः स्वर्गाद्रि र्न ग्राह्यः। तत्र ब्रह्मणो दिक्पालानां चाष्टानां पुर्य्यो न वसन्तीत्युक्तेः ॥ ३६



**सकाम्या निष्काम्या देवानां सर्वेषां भूतानां भवति ॥ ३७ ( वि ३३ )**

**यथा हि वै सरसि पद्मं तिष्ठति, तथा भूम्यां तिष्ठतीति चक्रेण रक्षिता हि वै मथुरा, तस्माद् गोपालपुरी भवति ३८ ( वि ३४ )**

**'बृहद् बृहद्वनं मधो र्मधुवनं तालस्तालवनं काम्यः काम्यवनं बहुलो बहुलावनं कुमुदं कुमुदवनं खदिरः खदिरवनं**

---

सकाम्याः काम्यैः सह वर्त्तमानाः सकामानां कामदेत्यर्थः। निष्कामः प्रेमा तदर्थाः तद्दानार्हा इत्यर्थः ॥ ३३ ॥ तत्र भौमदृष्टिं निवारयति—यथा हीति। चक्रेण रक्षिता महाप्रलयापद्भ्योऽपि तस्मादेव हेतो र्नित्यविलासिनो गोपालस्य पुरी हीति ॥ ३४

पुर्य्या वहिः स्थितानि वनान्याह—वृहद् विस्तीर्णमतएव प्रथमलीलास्पदत्वेन, बृहदिति वा हेतो र्बृहद्वनं। मधो र्दैत्यस्य वधा-द्धेतो र्मधुवनं। ताल आसीदित्यत स्तालवनं। काम्यः भक्तैः कृष्णोऽत्र काम्यत इति काम्यवनं। बहुला श्रीहरेः पत्नीति स्कान्दात्, सा यत्रास्तीति 'अर्शआद्यचि' बहुलः। कुमुदमत्र बहुतरं विकसतीति

---

अतिशय-बोधनाय गोपालपुरीं पृथग् विशिनष्टि स्मेत्याह—सकाम्येति ॥

पुर्य्या भू-विकारत्वं वारयति स्मेत्याह—यथा हीति। तस्मादिति—यस्मादीदृशी तस्माद् गोपालस्य नराकृतेः परब्रह्मणः पुरी भवति, परव्योमोर्ध्व-स्थिता स्वपुरीं भुवि पूर्वमवतार्य्य तस्यां सर्वशक्ति-विशिष्टः प्रादुर्भवतीति तस्य पूर्णब्रह्मत्वमुक्तं ॥ ३८

पुरीं निरूप्य तद्वनानि निरूपयतिस्म—बृहदिति। बृहदतिविस्तीर्ण-मिति बृहद्वनं मधुर्दैत्य स्तत्र प्रागासीदिति मधुवनं, ताल इति जात्यैकवचनं। एवमग्रेपि बोध्यं। तालवृक्षा स्तत्र सन्तीति तालवनं। काम्योऽतिमनोज्ञः

भद्रो भद्रवनं भाण्डीर इति भाण्डीरवनं श्रीवनं लौहवनं वृन्दया * वृन्दावनं । एतैरावृता पुरी भवति ॥३९ (वि ३५)

'तत्र तेष्वेव गहनेष्वेवं' ‡ देवा मनुष्या गन्धर्वा नागाः किन्नरा गायन्तीति नृत्यन्तीति ॥ ४० ॥ तत्र द्वादशादित्या

---

कुमुदवनं । खदिरो वृक्षविशेषोऽस्तीति खदिरवनं । भद्रो वलभद्रः खेलतिस्म अत्रेति भद्रवनं । भाण्डीरो वटोऽत्रास्तीति भाण्डीरवनं । श्रीफलवनमतः श्रीवनं । लौहजङ्घपालितत्वात् लौहवनमिति । वन-द्वयमिदं श्रुत्या न निरुक्तं । तन्निरुक्तिद्वयस्य श्रुत्या प्रामाण्यानङ्गी-कारादिति वुध्यते । वृन्दा या वनदेवता तस्याः ॥ ३५

---

कृष्ण स्तत्र क्रीड़ति काम्यवनं । वहुलत्वाद् वहुलायोगाच्च प्रदेशो वहुल इति हेतो र्वहुलावनं । संज्ञायां पूर्वपदस्य दीर्घः, मिश्रकावनमितिवत् । कुमु-दानि तत्र नित्यं विकसन्तीति कुमुदवनं । खदिरा स्तत्र वहवः सन्तीति खदिरवनं । भद्रो वलभद्र स्तत्र क्रीड़तीति भद्रवनं । भाण्डीरो वट स्तत्र कृष्णा-रलनिवद्धतटीक श्चकास्तीति भाण्डीरवनं । श्रियो वनमिति श्रीवनं । कृष्णा-भिलाषिणी लक्ष्मी र्यत्र तप श्चचारेति व्याख्यातारः । लोहजङ्घस्तत्र दैत्यः प्रागासीदिति लोहवनं । वृन्दया देव्याधिष्ठितत्वाद् वृन्दावनं । अन्तेऽस्योक्ति रतिमधुरवहुलीलास्पदत्वात् सर्वतो वरीयस्त्वं व्यञ्जयति । एतै र्द्वादशभि र्वनै रावृतत्वात् पुर्या अतिमहत्त्वमतिरम्यत्वं च व्यञ्ज्य ॥ ३९

वनेषु निवसतां चरितान्युवाच—तत्रेति । तत्र मथुरायां तेषु तद्वनेषु च एव त्रिपादूगत-गानादि-साम्येन देवादयः कृष्णं गायन्ति, तदावेशान्नृत्यन्ति च । इति शब्दौ सादृश्ये स्तः, प्रणामादीनि च कुर्वन्तीत्यर्थः ॥ ४०

पुर्याः सर्वदेवनिषेवितत्वमुवाच—तत्रेत्यादिना विनायका इत्यन्तेन।

---

* वृन्दाया । ‡ एतेष्वेव गहनेष्वेव ।



एकादश रुद्रा अष्टौ वसवः सप्त मुनयो ब्रह्मा नारदश्च पञ्च विनायकाः वीरेश्वरो रुद्रेश्वरोऽम्बिकेश्वरो गणेश्वरो नीलकण्ठे-श्वरो विश्वेश्वरो गोपालेश्वरो भद्रेश्वर आद्यानि लिङ्गानि चतु-र्विंशति र्भवन्ति ॥ ४१ (वि ३६) ॥

द्वे वने स्तः कृष्णवनं भद्रवनं, तयोरन्त र्द्वादश वनानि पुण्यानि पुण्यतमानि ॥ ४२ (वि ३७) ॥

तेष्वेव 'देवा' * स्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्ताः॥ ४३ (वि ३८)

---

वीरेश्वर इत्यादीन्यष्ट एतान्येवैकैकस्मिन् त्रिश इति चतुर्विंशतिः ।

कृष्णवनं भद्रवनमिति वृहन्मधुतालकाम्य-वहुला-कुमुद-खदिर-वृन्दाङ्कितान्यष्टौ वनानि श्रीकृष्णस्य । भद्र-भाण्डीर-श्रीलौहाङ्कितानि चत्वारि वलदेवस्येतर्थः ॥ ३७।३८ ॥

---

रुद्राधिष्ठानानि तत्र लिङ्गानि सन्तीत्युवाच वीरेश्वर इत्यादिना । अष्टौ लिङ्गानि गणयित्वोवाच आद्यानीति एतत्प्रभृतीनीत्यर्थः ॥ ४१

सामान्येनोक्तानि वनानि कृष्णवलयो र्विभज्य दर्शयितिस्म—द्वे वने स्त इति । भद्रवनं वलभद्रवनमित्यर्थः । द्वेराश्येन विभक्तयो स्तयो रन्त-र्भूतानि द्वादशवनान पुण्यानि पापहराणि पुण्यतमानि अतिचारूणि । 'पुण्यं तु चार्व्वपि' इत्यमरः । वृन्दावनादीन्यष्टौ कृष्णस्य, भद्रश्रीलोहवृहन्ति वलभद्रस्येति व्याख्यातारः ॥ ४२

तेष्वेव देवा आदित्यादयोऽदृश्यतया तिष्ठन्ति । 'अत्र देवाश्च भूतानि वर्त्तन्ते सूक्ष्मरूपत' इति वृहद्गौतमीयात् । सिद्धा नित्यमुक्ताः, साधनैः सिद्धिं प्राप्ता श्चन्द्रध्वजादयो मुक्ताः ॥ ४३

---

* वेदा ।

तत्र हि रामस्य राममूर्त्तिः प्रद्युम्नस्य प्रद्युम्नमूर्त्तिः अनिरुद्धस्यानिरुद्धमूर्त्तिः कृष्णस्य कृष्णमूर्त्तिः ॥ ४४ ॥

वनेष्वेवं मथुरास्वेवं द्वादश मूर्त्तयो भवन्ति ॥ ४५
( वि ३९ )

एकां हि रुद्रा यजन्ति द्वितीयां ब्रह्मा यजति तृतीयां 'ब्रह्मजा' * यजन्ति, चतुर्थीं मरुतो यजन्ति पञ्चमीं 'विनायका' † षष्ठीं वसवो यजन्ति सप्तमीमृषयो यजन्ति

वनेषु द्वादशेति एकैकस्या मूर्त्तेस्त्रिषु त्रिषु वनेषु पृथक् पृथगधिष्ठानात्। मथुरास्विति वनेषु इत्यस्य विशेषणं। सर्वेषामेव वनानां मथुरात्वात् एवमेवं द्वादश मूर्त्तयो भवन्तीति अन्वयः ॥ ३९

एकां हि प्रथमां रामस्य मूर्त्तिं वृहद्वनस्थां रुद्रा रुद्रलोके। द्वितीयां प्रद्युम्नमूर्त्तिं मधुवनस्थां ब्रह्मा ब्रह्मलोके। तृतीयां अनिरुद्धमूर्त्तिं तालवनस्थां ब्रह्मजाः सत्यलोके। चतुर्थीं कृष्णमूर्त्तिं काम्य-

कृष्णस्य स्वयं भगवत्तां बोधयितुं तस्य चतुर्व्यूहात्मकतामुवाच—तत्र हीति। रामस्य राममूर्त्तिरिति, न तु तदाविष्ट-शेषाख्यमूर्त्तिरिति, को वास्य व्याख्यानिरस्त्योत्तरं। वासुदेवस्य कृष्णेऽन्तर्भावाच्च पृथक् प्रदर्शनं ॥४४

वनेष्वेवमिति—मथुरास्विति तत्प्रदेशेष्वित्यर्थः। एषां स्थिति र्यथा सम्भवं बोध्या, न तु सर्वेषां सर्वत्रेति। तत्र चतुर्णामेव मथुरायां स्थिति वृन्दावनादिषु तु रामकृष्णयोरिति ज्ञेयं ॥ ४५

कीदृशी चास्य पूजा, तस्योत्तरतया तत्तद्भावानुसारेण द्वादशधा विभूतं गोपालं रुद्रादयः पूजयन्तीत्युवाच—एकां हीत्यादिना। ऋषयोऽत्र

* ब्रह्मज्ञा। † पञ्च विनायका।



अष्टमीं गन्धर्वा यजन्ति नवमीमप्सरसो यजन्ति दशमीह वै ह्यन्तर्धाने तिष्ठति। एकादशमेति स्वपदं गता। द्वादशमेति भूम्यां हि तिष्ठति ॥ ४६ ( वि ४० )

तां हि ये यजन्ति ते मृत्युं तरन्ति मुक्तिं लभन्ते गर्भजन्मजरामरणतापत्रयात्मकं दुःखं तरन्ति ॥४७ (वि ४१)

तदप्येते श्लोकाः—प्राप्य मथुरां पुरीं रम्यां सदा

वनस्थां मरुतो देवा देवलोके। पञ्चमीं पुना राममूर्त्तिं बहुलावनस्थां। षष्ठीं पुनः प्रद्युम्न-मूर्त्तिं कुमुदवनस्थां सप्तमीं पुनरनिरुद्धमूर्त्तिं खदिर-वनस्थां। अष्टमीं पुनः कृष्णमूर्त्तिं भद्रवनस्थां। नवमीं पुनरपि भाण्डीरवनस्थां राममूर्त्तिं, दशमीं श्रीवनस्थां प्रद्युम्नमूर्त्तिं, अन्तर्धाने तिष्ठतीति सा कदापि न प्रकटीभवति इति तस्या उपासका अपि न सन्ति। एकादशमा एकादशी लोहवनस्थानिरुद्धमूर्त्तिः स्वपदं द्वारकां श्वेतद्वीपं वा गता; द्वादशमा इति द्वादशी वृन्दावनस्था कृष्णमूर्त्ति भूम्यां प्रकटीभूय श्रीगोपाल-गोविन्द-गोवर्द्धनधर-गोपीनाथाद्याभि-धाना भूम्यां तिष्ठन्ति ॥ ४०।४१ ॥

द्वादशादित्या बोध्याः। दशमीति—अन्तर्धाने तिष्ठत्यदृश्याऽदृश्यास्तीत्यर्थः। एकादशमेति—एकादशीति व्याख्याता, साऽपि स्वपदं गताऽदृश्यास्तीत्यर्थः। द्वादशमेति—या द्वादशीति प्रसिद्धा गोविन्दाख्या वृन्दावनाधिदेवता मूर्त्तिः, सा हि भूम्यां तिष्ठति; अतिकारुणिकत्वाद् भूवर्त्तिनां कल्याणकारिणी दृग्गोचरतामासादयन्त्यस्तीत्यर्थः। अष्टैकामित्यादि संख्या-समावेशो द्वादशत्व-पूरणार्थो, तत्वचर्याचिंक-क्रमबोधनार्थः। उत्तरेण पर्यायद्वयेन सह विरोधात्, तत्क्रमेण तद्बोधस्तु तत्तन्नामयुक्त स्तृतीय-पर्यायाद् बोध्यः ॥ ४६

तामिति—द्वादशीं, सर्वामित्येके ॥ ४७

ब्रह्मादि-सेवितां। शङ्ख-चक्र-गदा-शार्ङ्ग-रक्षितां मुषलादिभिः॥ यत्रासौ संस्थितः कृष्णस्त्रिभिः शक्त्या समाहितः। रामानिरुद्ध-प्रद्युम्नै रुक्मिण्या सहितो विभुः॥ (वि ४२) चतुःशब्दो भवेदेको 'ह्योङ्कारस्यांशकैः कृतः' *॥ ४८ (वि ४३)

तस्मादेवं परो रजसेति सोऽहमित्यवधार्य्यात्मानं

---

मथुरायां चतुर्व्यूहात्मकस्य भगवतो नित्यावस्थितिं श्लोकै र्निरूपयति— तदध्येते इति मथुरां प्राप्य कृतार्था भवन्तीति शेषः। त्रिभी रामादिभिः शक्त्या रुक्मिण्या सह सम्यक् स्थानमुक्त्वा मुमुक्षूणामुपासकानां मन्त्रमाह—चतुःशब्द श्चतु संख्याविशिष्टः शब्दः रामप्रद्युम्नानिरुद्ध-रुक्मिणीरूप एक ॐकार श्चतुःशब्दवाच्यानां रामादीनामेक ॐकार एव वाचक इत्यर्थः॥ ४३

तस्मादेव तन्मन्त्रजपादेव, परो रजसेति सन्धिश्छान्दसः।

---

उक्तेऽर्थे मन्त्रानुवाच—तदध्येत इति। मथुरां पुरीं प्राप्य जना स्तन्निवासमात्र-सामर्थ्यात् कृतार्था भवन्तीति शेषः। यत्रेति—समाहितः सर्वभक्तप्रीणने सावधानः, तत्र हेतु र्विभुरिति। अत्र रुक्मिण्येति भामादीनां रेवत्यादीनां चोपलक्षणं, कृष्णस्यैव तद्व्यूहस्य रामादेः पूज्यतां सूचयन्नुवाच-चतुरिति। चत्वारः कृष्ण-राम-प्रद्युम्नानिरुद्धाः शब्दा यत्र स एक एवार्थ स्तैः शब्दै र्वाच्य इत्यर्थः। ॐकारस्यांशकैरकारादिभिः कृतो वाच्यतया प्रकाशित इति प्रणव-महावाक्यार्थो भगवानित्युक्तं॥ ४८

कीटभृङ्गन्यायेन ध्येयावेशस्य तत्सारूप्यहेतुत्वान्मत्स्वरूपगुणात्मावेशेन मदुपासना कार्येति भावेन स्वध्यानमुपदिशतिस्म — तस्मादिति।

---

* ह्योङ्कारः समुदाहृतः।



गोपालोऽहमिति भावयेत्। स मोक्षमश्नुते, स ब्रह्मत्वमधिगच्छति, स ब्रह्मविद् भवति॥ ४९ (वि ४४)

गोपान् जीवान् वै आत्मत्वेनासृष्टिपर्य्यन्तमालाति स गोपालो भवति ह्यों तत्सत्। सोऽहं परब्रह्म कृष्णात्मको नित्यानन्दैकरूपः 'सोऽहमों तत्' ❀॥ ५० (वि ४५)

---

रजसः प्रकृतेः परः भवतीति हेतोः सोऽहमित्यवधार्य्य स गोपालोऽहमित्यवधार्य्य स गोपालोऽहमिति ज्ञात्वेत्यर्थः। अभ्यासार्थं तथैव पुनः पुन र्ध्यायेदित्याह—गोपाल इति॥ ४४

मुमुक्षूणां मते गोपाल-शब्दार्थं व्याचष्टे—गोपानिति। गा इन्द्रियाणि पान्ति रक्षन्ति तदर्थान् शब्दादीन् पिबन्त्यास्वादयन्ति वा गोपी जीवा वा तान् आत्मत्वेन आलाति, आ इत्येतद् व्याचष्टे सृष्टिपर्य्यन्तमिति। स गोपालो हि ॐमिति तदिति सदिति परं ब्रह्मेति शब्दैरुच्यत इत्यर्थः। स च कृष्णात्मकः कृष्णाकारः। ननु आकारो हि भौतिको भवति, तत्राह—नित्यानन्दैकरूपः, भगवदाकारो हि भौतिको न भवेत् 'न तु भूतमयस्येति' श्रीभागवतात्॥ ४५

---

ध्येयावेशस्य तत्सारूप्योपलम्भकत्वादित्यर्थः। रजसः प्रकृतेः परो वस्तुतो विशुद्धचिद्रूपोऽहमिति विचार्य्य साधकः सोऽहमित्यात्मानं स्वमवधार्य्य स्वांशिनि स्वामिनि गोपालेऽभिनिविष्टमनाः सन् गोपालोऽहमिति भावयेत्। भद्रसेनो ममात्मेव मानसमैक्यमेतत्। मनसैक्यं कुर्य्यादित्युत्तरत्र पाठात्। स भावको मोक्षमश्नुते कथमित्यत्राह—ब्रह्मत्वं प्रजापत्युपदिष्टमपहतपाप्मत्वादिस्वकीयं गुणाष्टकमादावधिगच्छति, ततो ब्रह्मगोपाल-स्वरूपं विन्दतीति॥ ४९

गोपालं प्राप्तस्य न तस्माद् विच्युतिरिति वक्तुं गोपाल-पदं निर्वक्ति—यो गोपानिति। गा भगवदङ्गकान्ति-पानीयानि उद्ग्रसमाभिः पिबन्तीति

---

❀ नास्तीदं।

❀ 'गोपाल' एव परं सत्यमवाधितं ॥ ५१ ॥ सोऽहमित्यात्मानमादाय मनसैक्यं कुर्य्यादात्मानं गोपालो-

यतो नित्यानन्दैकरूप स्तत्तस्मात् गोपाल एव परं अवाधितं सत्यं वास्तव-वस्त्वित्यर्थः। सोऽहमिति ज्ञान-प्रकारमुपदिशति। सोऽहमिति मनसात्मानं जीवं आदाय आत्मना तेन जीवात्मना सह सोऽहमित्यैक्यं कुर्य्यादित्यन्वयः। ततश्चैवं गोपालोऽहमिति यो भावयेत् स एवाव्यक्तः जन्मरूपव्यक्तिरहितः अन्तो नाशश्च तद्रहितो गोपालो भवेत्, तत्र सायुज्यं प्राप्नोतीत्यर्थः। किञ्च स यात्यनायासतः केवलं तत् पदं तत् अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन् पूर्वमर्शदिति ब्रह्मोक्त्या तस्मात् कृष्ण एव परो देव स्तं

निरुक्ते नित्यसिद्धाः साधनसिद्धाश्च जीवा गोपाः, तानासृष्टि-पर्य्यन्तं सर्गं प्रलयञ्च व्याप्य आत्मत्वेन तेष्वत्यावेशादात्मवत् प्रेमास्पदत्वेन आलाति यो गृह्णाति स कृष्णात्मको नित्यानन्दैकरूपो गोपालो भवति। हि निश्चये। गो-भूमि-वेदपालकत्वं चार्थान्तरमस्य वोध्यं। तदेवों तत्सद् वाच्यं परं ब्रह्म, सर्वैं वेदान्तै र्गीयते, ॐ तत्सत् पदवाच्यः स गोपालोऽहमिति भावयेदिति शेषः। ब्रह्मप्राप्तस्य पुनरावृत्ति र्नास्तीति छन्दोगाः पठन्ति—'न स पुनरावर्त्तते' इति ॥ ५०

न तु जैवस्वरूपोपासनयापि मोक्षो वर्ण्यते। 'आत्मानं चेद् विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदित्यादिषु; ततः किं गोपालोपासनयात्यावेशेनेति चेत्तत्रोवाच—गोपाल एवेति। यद्यपि जीवः सत्य स्तथापि ज्ञानसङ्कोच-विकाशलक्षणपरिणामयोगात् परसत्यः स न भवेत्, किन्तु तल्लक्षणस्यापि तस्याभावात् गोपाल एव परं सत्यं वस्तु अवाधितं शरीर-सम्बन्धहेतुकवाधवर्जितमित्यर्थः। जैवस्वरूपोपलम्भोऽपि गोपालोपासनयैवेति भावः ॥ ५१

❀ त्वद्गोपाल।



ऽहमिति भावयेत् ॥ ५२ ॥ स एवाव्यक्तो नित्योऽनन्तो गोपालः ॥ ५३ ( वि ४६ ) ॥

ध्यायेत् तं रसयेत्तं यजेत्तं भजेदिति पूर्वतापन्योक्तं। ब्रह्मणो हि प्रतिष्ठाहमिति गीतोक्तञ्च। ब्रह्मतोऽति प्रकृष्टं कृष्णं ये जानन्ति ब्रह्मसायुज्य-स्पृहारहिता महाभागवता स्तद्दास्यादिभाववन्तः प्रेम्णा तन्माधुर्य्यास्वादिन स्तेऽप्युपासनायां गोपालोऽहमिति भावयन्त्येव। किन्तु गोपालशब्दस्य योगरूढस्य यस्मिन्नर्थे ऋषयः 'परोक्षञ्च मम प्रिय'मिति भगवदभिप्रायानुसारिण्या हरस्य पदार्थ-संगोपिन्या श्रुत्या गोपान् जीवानात्मत्वेनालाति इति प्रतिपादितेन कष्टार्थेन। यदुक्त वेदगुह्यानि हृत्पतेरिति। तथाहि गाः पालयति इति गोपाल इति शब्दानुशासनं, गोपो गोपाल गोसंख्य गोधुगाभीर-वल्लवा' इत्यभिधानञ्च। ततश्च ये शुद्धदास्यरसानुरागिणो भक्ता स्ते श्रीकृष्णदासेषु गोपालेष्वेव मध्ये निष्ठासत्त्या गोपालोऽहमिति भावयन्ति। ये सख्यरसानुरागिण स्ते कृष्ण-सखेषु श्रीदामसुवलादिषु मध्ये गोपालऽहमिति अभिमन्यन्ते। ये वात्सल्यरसानुरागिण स्तेऽपि कृष्णपितृ-पितृव्यादिषु

तदावेशिना मनसा गोपालेन सार्द्धमैक्यं कुर्य्यात, न तु स्वरूपेणेत्याशयः। अतिमैत्र्या क्वचिद् विशुद्धे प्राणिन्येवमादेशो लोकेऽपि दृष्टः, त्वमहमेवेति। एवमाह सूत्रकृत्—पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवदिति। अस्यार्थः गोपालोऽहमस्मीति भावः। पूर्वस्या भक्तेरेव विकल्पः प्रकारः, कुतः ? प्रकरणात्, 'भक्तिरस्य भजनमि'त्यादिना पूर्वं तस्याः प्रकृतत्वात्। तत्र दृष्टान्तः — क्रियाऽर्च्चनाद्या मानसं च ध्यानं, ते यथा भक्तेः प्रकारौ तथायमपीत्यर्थः। केवलाद्वैतवादस्तु न श्रद्धेयः, भाष्यपीठकादिषु निरस्तत्वात्। मनसैक्यं कुर्य्यादित्यत्रैव तदनङ्गीकाराच्च ॥ ५२

स गोपाल एवाहमित्यन्वयः। अव्यक्तः प्रत्यग्रूपः नित्यः कूटस्थः अस्य ध्येयाहंभावस्याभ्यास स्तस्योपादेयतां व्यञ्जयति ॥ ५३

मथुरायां स्थिति र्ब्रह्मन् सर्वदा मे भविष्यति ।
शङ्खचक्रगदापद्मवनमालावृतस्तु वै ॥ ५४ (वि ४७)
'विश्वरूपं' * परं ज्योतिःस्वरूपं रूपवर्जितं ।
हृदा मां संस्मरन् ब्रह्मन् मत्पदं याति निश्चितं ॥५५ (वि४८)

---

नन्दोपनन्दादिषु मध्ये कोऽप्यहं गोपाल इत्यात्मानं ध्यायन्ति । ये मधुररसानुरागिणो लोका स्ते कृष्णप्रेयसीषु ललिता-विशाखा-रूप-मञ्जर्य्यादिषु मध्ये कापि गोपाल्यहमिति लिङ्ग-विपरिणामेनात्मानं स्मरन्ति । एवञ्च 'नादेवो देवमर्च्चयेदिति' वचन-व्याकोपश्च नैवाभूत् । श्रीकृष्णस्य तत्परिवाराणाञ्चोपासकैः पूज्यत्वेन देवत्वाव्यभिचारात् । किन्त्वहंग्रहोपासना हि शुद्धभक्तै र्नादृतेति वक्तव्यमिति सर्वं समञ्जसम ॥ ४६

तदेवं श्रीगोपालस्य सर्वश्रैष्ठ्यमुक्त्वा पद्मनाभः स्वस्यापि तदनुगतिं दर्शयति—मथुरायामिति । स्थिति स्तदावरणदेवतात्वेन सर्वदैव भवेत् । तत्प्राकट्यसमये तु भविष्यतीत्यर्थः । वनमाला वृणोतीति वनमालांवृत् तस्य ॥ ४७ ॥ रूपवर्जितमिति प्राकृतरूप-वर्जितं । वैराज्योपासना-व्यावृत्त्या मम स्वरूपं चित्स्वरूपं न तु मायिकं, मत्पदं मद्धाम ॥

---

अथोक्तायाः पुर्य्याः स्वानित्याधिष्ठानत्वमाख्यत् मथुरायामिति । हे ब्रह्मन् चतुर्मुख मत्पार्षदेतराऽलक्ष्यतया मथुरायां सर्वदा मे स्थिति रस्ति, स्मृतिश्च 'मथुरा भगवान् यत्र नित्यं सन्निहितो हरिरिति' यथायोगं सर्वगोचरतया तु तस्मिन् द्वापरावसाने मे स्थिति र्भविष्यति । मे कीदृशस्य—शंखादिका वृणोति स्वीकरोति धारयतीति तस्य ॥ ५४

तत्र मद्विचिन्तनान् मोक्षो भवतीत्याख्यत्—विश्वरूपमिति । विश्वानि सर्वाणि मत्स्यादीनि रूपाणि यत्र तत्, ज्योतिःस्वरूपं चिद्घनं, रूपेण प्राकृतेन वर्जितं, पदमङ्घ्रिं ॥ ५५

---

* चित्स्वरूपं



मथुरामण्डले यस्तु जम्बूद्वीपे स्थितोऽपि वा ।
योऽर्चयेत् प्रतिमां माञ्च स मे प्रियतरो भुवि ॥ ५६ (वि ४९)
तस्यामधिष्ठितः कृष्णरूपी पूज्य स्तया सदा ॥ ५७ (वि ५०)
चतुर्धा चास्याधिकारि-भेदत्वेन यजन्ति माम् ॥ ५८ (वि ५१)
युगानुवर्त्तिनो लोका यजन्तीह सुमेधसः ।
गोपालं सानुजं रामरुक्मिण्या सह तत्परं ॥ ५९ (वि ५२)

---

मथुरामण्डलवासासामर्थ्ये सति जम्बूद्वीपे प्रतिमां प्रतिमायामित्यर्थः ॥ ४९ ॥ तस्यां प्रतिमायां कृष्णरूप्येव, तस्यैव सर्वोत्कर्षात् ॥ ५०।५१ ॥ चतुर्धा चतुर्व्यूह-भेदेन अस्य लोकस्य अधिकारिभेदत्वं ; यजन्ति केचित् रुक्मिण्या सह तत्परं । स चासौ परश्चेति तं कृष्णं, रुक्मिणी-परायणं वा ॥ ५२

---

चिद्विग्रहस्य मम चिन्ताया दुःशकत्वान् मत्प्रतिमोपासना कार्य्येत्याख्यत्—मथुरेति । जम्बूद्वीपेऽपि यत्र कापि स्थितो योऽर्चयेत्, किं पुन र्मथुरामण्डले स्थित इत्यर्थः । प्रतिमाञ्च मामिति तस्यां शैलत्वादिधी र्निवारिता ॥ ५६

तस्यां प्रतिमायामधिष्ठितोऽहं कृष्णरूपी श्यामसुन्दर स्त्वया ब्रह्मणा पूज्यः ॥ ५७

अस्योपासनस्याधिकारिणां भेदो यस्मात्तथात्वेन हेतुना चतुर्धा 'आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी चेति' चतुर्विधा जना मां यजन्तीति स्वभावानुसारेणाराधयन्ति ॥ ५८

युगेति—कृतादियुगानुष्ठेय-ध्यानादि-निष्ठाः सुमेधसो लोका इह मथुरायां गोपालं मां यजन्ति भजन्ते । अनु पश्चाज्जातत्वादनुजौ प्रद्युम्नानिरुद्धौ ताभ्यां सहितं रामं बलभद्रं च रुक्मिण्येति भागवदुपलक्षणं भामादीनां रेवत्यादीनां च । तत्परं यथा स्यादेवं तात्पर्य्येणेत्यर्थः ॥ ५९

गोपालोऽहमजो नित्यः प्रद्युम्नोऽहं सनातनः ।
रामोऽहमनिरुद्धोऽहमात्मानमर्च्चयेद् बुधः ॥ ६० (वि ५३)
मयोक्तेन स्वधर्मेण निष्कामेन विभागशः ।
तैरहं पूजनीयो वै भद्रकृष्ण-निवासिभिः ॥ ६१ (वि ५४)
तद्धर्मगतिहीना ये तस्यां मयि परायणाः ।
कलिना ग्रसिता ये वै तेषां तस्यामवस्थितिः ॥६२ (वि ५५)

---

अहंग्रहोपासनं दर्शयति—गोपालोऽहमिति ॥ ५३ ॥ विभागेन गोपालादिचतुर्विधेन विभागशः पृथक् पृथक् तत्तत् तन्त्रदृष्ट्या उवाच ॥

किञ्च तत्तद्भजनविधिज्ञानाभावेऽपि न क्षतिरित्याह—तद्धर्मेति । भगवद्धर्मरूपा या गतिस्तया हीना ये, किन्तु मयि परायणा मामाश्रितवन्तः, कलिना ग्रसिताः पापासक्तास्तेषामपि तस्यां मथुरायां मथुरामण्डलेऽवस्थिति र्वासेऽधिकार इति मथुरायाः कृपालुत्वेन सर्वतीर्थतः श्रैष्ठ्यमुक्तम् ॥ ५५

---

अत्यावेशेन ममोपासना कार्य्येत्याह—गोपालोऽहमिति । आत्मानं चिदानन्दैकरसं विभुं परेशं बुधो भाववित् पुरुषः ॥ ६०

मयेति—भद्र-कृष्ण-निवासिभिः पूर्वोक्तवनद्वयस्थितै स्तै र्जनै र्मया भगवतोक्तेन स्वधर्मेण स्वानुष्ठातव्येनामानित्वादिना विंशति-संख्येन निष्कामेन मदितरफलवाञ्छावर्जितेनाहं पूजनीयः विभागश श्चातुरात्म्येन स्थितः ॥६१

ननु त्वदुक्तधर्महीनानां मथुरायां निवसतां न तया कल्याणमिति चेत्तत्राख्यत्—तद्धर्मेति । तेषां धर्माणां गत्या प्राप्त्या ये हीना स्तस्यां निवसन्ति, ये च तस्यां स्थित्वा मयि परायणा अदम्भित्वादि-धर्माणो मदेकान्तिनः, ये च तस्यां स्थित्वा कलिना ग्रसिता दुराचाराः परद्रोहिणः (इड़ागमस्कान्दतः) तेषां सर्वेषां तस्यां मथुरायामवस्थिति रविशेषेण निवासफलभाक्त्वं, नत्वन्य-तीर्थवत् सत्कर्मवतामेवेत्यर्थः । एवमुक्तमादिवाराहेऽपि—'येषां क्वापि गति-



यथा त्वं सहपुत्रैश्च यथा रुद्रो गणैः सह ।
यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रियः ॥ ६३ (वि ५६)

स होवाचाब्जयोनिः—चतुर्भि र्देवैः कथमेको देवः स्यादेकमक्षरं यद्विश्रुतमनेकाक्षरं कथम् भूतम् ? ६४ (वि ५७)

स होवाच तं ह वै पूर्वं ह्येकमेवाद्वितीयं ब्रह्मासीत्तस्मादव्यक्तं व्यक्तमेवाक्षरं तस्मादक्षरान्महान् महतो वा

---

ननु पापासक्तान् साक्षाद् ब्रह्मस्वरूपायां श्रीमथुरायां किमिति वासयसि, तत्राह यथेति । भक्तो यादृश स्तादृशो भवतु, मत्प्रिय एवेत्यभिप्रायः ॥ ५६

चतुर्भी रामादि-संज्ञै र्देवैः कथमेकः कृष्णाख्य एव देवः स्यात् ? प्रणवस्यैकाक्षरत्वेन प्रसिद्धे स्तद्वाच्यः असावेक एव भवितुमर्हति, न तु चतुष्टय इति भावः । प्रणवोऽपि चतुष्टयात्मक इति चेत् एकमक्षरं प्रणव-संज्ञकं यद् विश्रुतं तत् कथमनेकाक्षरमभूत् ॥ ५७

स नारायणः उवाच—एकमपि वास्तवं वस्तु स्वल्पेणैवाचिन्त्य-शक्त्या रामादि-बहुस्वरूपं भवति यत्तदेकमेव 'बहुमूर्त्त्यैकमूर्त्तिकमिति'

---

नास्ति तेषां मधुपुरी गति' रिति । तथा च स्वनिवासमात्रेणैव या पापिष्ठानपि तारयतीति महानभावोऽतिकारुणिकत्वञ्चेति ॥ ६२

तर्हि तन्निवासिनां त्वदुक्तधर्मानुष्ठानं किमर्थमिति चेत्तत्राख्यत्—यथेति । पुत्रैः सनकादिभिः गणैः प्रमथैः श्रिया रुक्मिण्यादिकया त्वदादीनां सनकादय इव ते भक्ता मम प्रिया इत्यस्ति तद्धर्मवतां फलातिशयः । अन्येषां तन्निवासिनां मुक्ति स्त्वसन्देहेति निष्कर्षः ॥ ६३

पूर्वं यत्रासौ संस्थितः कृष्ण इत्यादिनैकस्यैश्वरस्यैकस्य प्रणवस्य च चतूरूपत्वमुक्तं, तस्यार्थस्यासन्देहाय प्रत्याह—स हेति । चतुर्भिरिति रामादिभि

अहङ्कार स्तस्मादेवाहङ्कारात् पञ्चतन्मात्राणि तेभ्यो भूतानि तैरावृतमक्षरं भवति ॥ ६५　( वि ५८ )

'अजोऽहमस्म्यक्षरोऽहमोङ्कारोऽहमस्मि' ॥ ६६ ॥ *

---

वचनात् । न तत्र वस्तुतः कार्य्यकारण-भावः, कार्य्याणां कारणात्मकत्वमिति न्यायस्तु प्राकृतस्थल एवेति तद्दर्शयति—पूर्वमिति । अव्यक्तं प्रधानं व्यक्तप्रपञ्चकारणत्वात् व्यक्तञ्च । अनश्वरत्वादक्षरञ्च । तस्मान्महदादीनि वस्तून्येव नश्वराणीत्याह—महदिति । अक्षरं प्रधानं, तैः स्वकार्य्यैरावृतमित्यर्थः ॥ ५८

---

श्चतुर्भि रेको देवः कथं, चतुष्ट्वैकत्वयो रेकत्र विरोधादिति भावः । ॐ मित्येकाक्षरं ब्रह्मेति यदेकाक्षरत्वेन विश्रुतं, तदनेकाक्षरमकारादिभावेन बह्वक्षरं कथं केन प्रकारेण भूतं बभूवेत्यर्थः ॥ ६४

स हेति—एवं पृष्टः स नारायणः कृष्ण स्तमब्जयोनिमुवाच—ह वै स्मरणे । एकस्यैव मे पराख्यशक्त्यैवानादितो रामादि-बहुरूपत्वं, प्रणवस्य चाकारादि-बहुरूपत्वमित्यत्र दृष्टान्तत्वेन प्रधानाख्यशक्त्या व्यक्तादि बहुरूपत्वं तावदाह—पूर्वं हीति । सृष्टेः पूर्वमेकमेव नराकृतिकं तमःशक्तिमद् ब्रह्मासीत्, तस्मादव्यक्तमक्षरं व्यक्तं प्रधान-शरीरकं जीवतत्त्वं ततः पृथगभूदित्यर्थः । तस्मादक्षराद् व्यक्तशरीरकाज्जीवतत्त्वा त्त्रिविधो महानुदभूत् । महतो वै त्रिविधोऽहङ्कारः, तस्मात् तामसादहङ्कारात् पञ्च शब्दादीनि तन्मात्राणि, तेभ्यः पञ्चभ्यः क्रमात् पञ्चाकाशादीनि भूतान्युदभूवन् ; राजसादिन्द्रियाणि सात्त्विकात्त देवता मनश्चेति बोध्यं । तैः स्थूल-शरीरभावेन स्थितैरक्षरं जीवतत्त्व तदावृतं भवति, तन्निर्मित-शरीरवान् जीवो भोगान् भुङ्क्ते इत्यर्थः ॥ ६५

अथ वाचकभावमाह—अजोऽहमिति । जन्मना क्षरणेन च रहितः,

---

* अक्षरोऽहमोङ्कारोऽजरोऽमरोऽभयोऽमृतो ब्रह्माभयं हि सः ।
मुक्तोऽहमेवास्मि अक्षरोऽहमस्मि ॥



सत्तामात्रं चित्स्वरूपं प्रकाशं व्यापकं तथा ॥ ६७ ॥

एकमेवाद्वयं ब्रह्म मायया तु चतुष्टयं ॥ ६८ ( वि ५९ )

रोहिणीतनयो राम अकाराक्षर-सम्भवः । तैजसा-

---

महदादि-कार्य्याणां प्रधानात्मकत्वात् प्रधानस्य मच्छक्तित्वात् शक्तिशक्तिमतोरैक्यात् । अहमेक एवास्मीत्याह । अक्षरोहमोङ्कारः मद्वाचकः प्रणवो वर्ण एकोऽहमस्मि । तद्वाच्यश्च स प्रसिद्धः कृष्णोऽहमेवास्मि । अजरोऽमर इत्यादि विशेषणै र्विशिष्टः । एकमेव यद् ब्रह्म तदेव मायया स्वरूपेणैव चतुष्टयं स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनमिति माध्वभाष्यधृतचतुर्वेदशिखाख्यश्रुतिः ॥ ५९

---

प्रणवोऽहमस्मीत्यर्थः । स्मृतिश्च प्रणव-प्रतिपाद्याय नमः । प्रणव-रूपिणे इति । अत्राहमर्थस्यावृत्तिः—स्वस्य तथात्वे तात्पर्य्य-ग्राहिका, स्वाभिन्नोऽयमिति पीठकादिषु द्रष्टव्यं ॥ ६६

ॐकारस्य शब्दत्वादुत्पत्ति-प्रध्वंस-शालित्वं प्राप्तं निवारयति—सत्तेति । सत्तया मीयते परिच्छिद्यते इति सत्तामात्रं सर्वदैव सत्ता-विशिष्टं तदक्षरमित्यर्थः । नन्वेतत् प्रकृत्यादेरप्यस्ति तत्राह—चित्स्वरूपमिति — तर्हि स्वात्मनि जड़ं स्यात् । ज्ञानं परं प्रकाशयदपि स्वात्मनि जड़मेवेति तार्किकसिद्धान्तादिति चेत्तत्राख्यत् — प्रकाशमिति । स्वात्मानं च प्रति प्रकाशत इति तथा । नन्वेतज्जीवस्यास्तीति चेत्तत्राख्यत्—व्यापकमिति । अस्तीत्येवोपलब्धव्यं स्वपर-प्रकाशकं व्यापकं यद् ब्रह्म तदेवोंकाराक्षरं, न तु नभोगुणः शब्द इत्यर्थः ॥ ६७

एकस्यैव तत्त्वस्य स्वशक्त्या चातुर्विध्यमाख्यदेकमिति — मायया-ऽचिन्त्यया स्वरूपभूतया शक्त्या चतुष्टयं रामादिरूपमकारादिरूपं चेत्यर्थः । मायाशब्दस्वरूपशक्ताविति व्याख्यातं प्राक ॥ ६८

त्मकः प्रद्युम्न उकाराक्षरसम्भवः। प्राज्ञात्मकोऽनिरुद्धो वै मकाराक्षरसम्भवः। अर्द्धमात्रात्मकः कृष्णो यस्मिन् विश्वं प्रतिष्ठितं ॥ ६९ ॥ कृष्णात्मिका जगत्कर्त्री मूलप्रकृति रुक्मिणी ॥ ७० ( वि ६० )

व्रजस्त्रीजन-सम्भूतश्रुतिभ्यो ब्रह्म-सङ्गतः। ( वि ६१)

---

यथैवैकमेव ब्रह्म स्वरूपेणैव चतुष्टयमभूत्, तथैव तद्वाचकमेकमेवाक्षरं प्रणवस्वरूपेणैव अक्षर-चतुष्टयात्मकमिति विवृणोति रोहिणीति। अकाराक्षरात् सम्भव आविर्भावो यस्य सः। तेजसाधिष्ठातृत्वात् तैजसात्मकः तेन रामस्य विश्वाधिष्ठातृत्वमायातं, अर्द्धमात्रा प्रणवान्तर्व्यक्ता विन्दुनादरूपा आत्मा प्रकाशिका यस्य सः विश्वं सर्वमेव यस्मिन् प्रतिष्ठितं इति तुरीयस्य ब्रह्मणोऽपि प्रतिष्ठात्वात्। ब्रह्मणो हि प्रतिष्ठाहमिति गीतोक्तेः। मूलप्रकृतिरंशो यस्याः सा चासौ रुक्मिणी चेति शाकपार्थिवादिः; यतः कृष्णात्मिका कृष्णस्वरूपभूता ह्लादिनी शक्तिः, न तु वहिरङ्गा माया। तस्या स्तत्स्वरूपस्वाभावात् जगत्कर्त्री जगत्कर्त्तुः श्रीकृष्णस्य पत्नी ॥ ६०

---

अथोभयो र्मायया चतुष्टयतां वाच्यवाचकभावञ्चोवाच—रोहिणीति व्यूहान्तर-भ्रान्ति र्निवर्त्तिता। अकाराक्षरेण प्रणवाङ्गेन सम्भवोऽभिव्यक्ति र्यस्य स, एवं परत्र वोध्यं। एष विश्वासात्मको वोध्यः। प्रद्युम्नाद्यो स्तैजसत्वादिभ्यां वक्तव्यत्वात, विश्वशब्देनाधिकैश्वर्य्या-प्रकाशित्वे तैजसादिशब्दाभ्यां ततो न्यूनतत्प्रकाशित्वं। जाग्रत्स्वप्न-सुषुप्तिदृष्ट-जीवस्य यद् विश्वतैजस-प्राज्ञत्वं तत्तु इतोऽन्यद् वोध्यं, अर्द्धमात्रेति नादो नेयः, तेनाजहल्लक्षणया सर्वोऽपि प्रणवावयवो ज्ञेयः। एतदेव प्रोवाच—यस्मिन्निति। तथा च रामादि-सर्वात्मकत्वेन कृष्णस्य पूर्णत्वमकारादिसर्वात्मकत्वेन प्रणवस्य च तदुयुक्तं ॥ ६९



प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः ॥ ७१ ॥ तस्मा-

---

गोप्य स्त्वनुरागेणैव प्राप्ततदङ्गसङ्गाः, न तु तत्पत्न्य इत्याह—व्रजस्त्रीजनेषु सम्भूता वृहद्वामनपुराणदृष्ट-तपोभिरुत्पन्ना या श्रुतयः ताभ्यो यद्वा ताः प्राप्य कृष्णो ब्रह्मसङ्गतः प्राप्तवेदाङ्गसङ्गोऽभुत्। ल्यब् लोपे पञ्चमी ॥ ६१

ननु रामादि-चतुष्टयात्मकस्य कृष्णस्य यदि प्रणवः प्रकाशक

---

अथ रुक्मिण्यादीनां स्ववत्प्रणववाच्यत्वं सूचयितुमुवाच—कृष्णेति। मूलभूता या प्रकृतिः परा शक्तिः सा रुक्मिणी। अतः कृष्णात्मिकेति परायाः कृष्णात्मकत्वं, 'परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानवलक्रिया चेति' श्रुतेः। तस्या 'मूलत्वं प्रति छविं प्रतिच्छवेरिव त्रिगुणां प्रति हेतुत्वाद् वोध्यं। रुक्मिणीति भामादीनामुपलक्षणं। परात्वञ्चासां लक्ष्मीत्वादेव सिद्धं। तत्त्वं च 'रेमे रमाभि र्निजकाम-संप्लुत' इति स्मरणात्। परैव लक्ष्मीरिति प्रोच्यते 'परमेशो य' इत्यादिकाद् वैष्णव-वाक्यात प्रसिद्धं। सा कीदृशीत्युवाच—जगत्कर्त्री। परावान् परमात्मा विश्वनिमित्तमिति सिद्धान्तादिदं वोध्यं ॥ ७०

अथ श्रीराधादेव्याश्च स्ववद् वाच्यत्वं द्योतयितुमुवाच—व्रजस्त्रीति। ब्रह्मसङ्गतः ब्रह्मणः कृष्णस्य सङ्गाद् दुर्वाससे भक्ष्यं देयमिति तद्वचनात्तत प्रेरणाद्धेतोः तदन्तिकगतेषु तेषु तं प्रति भगवत्तत्त्वं पृच्छत्सु व्रजस्त्रीजनेषु राधादिषु संभूता स्तेनोक्ता याः श्रुतयः 'अजोऽह'मित्याद्या 'यस्मिन विश्वं प्रतिष्ठित'मित्यन्तिमा स्ताभ्योवगतेन कृष्णस्य प्रणवत्वेन स्ववाचकोङ्कार-रूपत्वेन हेतुना तस्यैव राधारूप-प्रकृतित्वं ब्रह्मवादिनो गौतमाद्या वदन्ति, कृष्णस्य यथा पुरुषाकारस्य तद्विलक्षण-राधात्वं चालौकिकत्व-हेतुकमनादि-सिद्धमिति भावः। तत्र गौतमः—'सत्वं तत्त्वं परत्वं च तत्त्वत्रयमहं किल। त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा। प्रकृतेः पर एवाहं सापि मच्छक्ति-रूपिणीति।' विरिञ्चश्च — 'आनन्दचिन्मयरसेत्यादि'। तथा च

दोङ्कार-सम्भूतो गोपालो विश्वसंस्थितः ॥७२ ( वि ६२ )

क्लीमोङ्कारयोरेकत्वं पठ्यते ब्रह्मवादिभिः ॥७३ (वि ६३)

मथुरायां विशेषेण मां ध्यायन् मोक्षमश्नुते ॥ ७४ ॥

अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितं । शङ्खध्वजातपत्रैश्च

चिह्नितं चरणद्वयं ॥ ७५ वि ६४ )

---

उच्यते, तर्हि कृष्णस्य स्व-प्रकाशकत्वं पराहतं इत्यत आह—प्रणवत्वेन प्रणव-स्वरूपत्वेन प्रकृतिरवं सर्ववेदानां कारणत्वं वदन्ति । तस्मादिति-यदि च प्रणव स्तस्य स्वरूपमेव तदा तत्प्रकाश्यत्वे तस्य न प्रकाशता-हानिरित्यर्थः । विश्वस्मिन् संस्थितः सर्वं जगदधिष्ठातेत्यर्थः । विश्वं सम्यक् स्थितं यत्र सर्वंजगदधिष्ठानमित्यर्थः ॥ ६२

नन्वेवं माहात्म्यात्मकः कथं मन्त्रादिभेदेन तद्रूप स्तदाह—क्लीमिति । ऐक्यमिति स्वार्थ्ये ष्यञ् तस्य भाव ऐक्यत्वं तत्तुल्य-मेवेत्यर्थः । तस्याप्यक्षरचतुष्टयात्मकत्वात ॥ ६३

---

श्रीराधायाः स्वात्मिकायाः स्ववत प्रणव-वाच्यत्वं दर्शितं ॥ ७१

तस्मात पूर्वोक्तार्थाद्धेतोः कृत्स्ने प्रणवे सम्भूतो वाच्यतयाभिव्यक्तः सर्वांशी गोपालो विश्वेषु प्रणवावयवेषु संस्थितः । अकारादिषु रामादिरूपो वाच्यतया संस्थितः । अर्द्धमात्रायां तु रुक्मिण्यादिभिश्च विशिष्टः कृष्णो-वाच्यतया संस्थित इत्यर्थः ॥ ७२

ननु मन्त्रराज-वीजस्य क्लीँकारस्यैवं भावमनुक्त्वा प्रणवस्य तदुक्तिः कुत स्तत्रोवाच—क्लीमिति । द्वयोरभेदात्तत्स्थाने २ वोध्य इति भावः ॥ ७३

पूर्वंमर्चास्थानत्वेन मथुराया जम्बूद्वीपतोदयमुक्तं । अथ तस्या विशेषमुवाच—मथुरायामिति । शैश्वमत्र विशेषः । यद्वा मोक्षं मत्प्राप्ति-विह्नाद् विमोकं ॥ ७४



श्रीवत्सलाञ्छनं हृत्स्थं कौस्तुभं प्रभया युतम् ।

चतुर्भुजं शङ्खचक्र-शार्ङ्ग-पद्म-गदान्वितम् ॥ ७६ (वि ६५)

सुकेयूरान्वितं वाहुं कण्ठमालासुशोभितं ।

द्युमत्किरीटवलयं स्फुरन्मकर-कुण्डलं ॥ ७७ ( वि ६६ )

हिरण्मयं सौम्यतनुं स्वभक्तायाभयप्रदं ।

'ध्यायेन् मम प्रियो' * वेणुश्रृङ्गधरन्तु वा ॥ ७८ (वि ६७)

मथ्यते तु जगत् सर्वं ब्रह्मज्ञानेन येन वा ।

---

ध्यानमाह—मथुरायामित्यादि— आतपत्रं छत्रं । पद्मशार्ङ्गयो द्वयो रेकस्मिन्नेव हस्ते धृतत्वात् चतुर्भुजत्वं ॥६४।६५।६६॥ वेणुश्रृङ्ग-धरन्तु वेति—मथुरा-प्रदेशविशेषे श्रीवृन्दावनादौ द्विभुजत्वं ध्वनितं ॥६७

मथुरा-पदनिरुक्त्या तन्माहात्म्यं दर्शयति—जगत् सर्वं क्षीरोद

---

ध्यानं स्फुटयति स्म—अष्टपत्रमिति । शंखध्वजातपत्रैरिति अर्द्ध-चन्द्रादीनां षोड़शानामुपलक्षणं ॥७५॥ असाधारण-लक्षणेन तदाह—श्रीति । श्रीहरिवंशे तद्रूपमेवोक्तं—स चास्योरसि विस्तीर्णे रोमां चोद्गमराजिमान् । श्रीवत्सो राजते श्रीमान् स्तनद्वयमुखाञ्चित इति श्रीवत्सादिद्वयमीशस्यासाधारणं विना श्रीवत्स-कौस्तुभाविति श्रीभागवतात् । अत्र चतुर्भुजत्वाच्छंखादिपञ्चक धारणानुपपत्तेः शार्ङ्गं पुरतः स्थितं ज्ञेयं ॥ ७६

सुकेयूरेति—वाहुमिति जात्यैकवचनं चत्वारो वाहवः सुकेयूरा इत्यर्थः । द्युमन्ति सुप्रभाणि किरीट-वलयानि मुकुट-कङ्कणानि यस्य तं ॥ ७७

हिरण्मयं सुपर्णवदतिस्पृहणीयमिति; प्रभं वेति व्याख्यातारः । सौम्यतनुं मनोज्ञाकृतिं स्वभक्तायेति जात्यैकवचनं । एवं मधुपुर्यां चतुर्वाहु-त्वेन ध्यानमुक्त्वा तत्प्रधानदेशे श्रीगोकुले द्विवाहुत्वेन तदुवाच वेणवति ॥ ७८

---

* ध्यायेन्मनसि मां ।

तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते ॥ ७६ ( वि ६८ )
अष्टदिक्पालिभि र्भूमिपद्मं विकसितं जगत्।
संसारार्णव-सञ्जातं सेवितं मम मानसे ॥ ८० ( वि ६९ )
चन्द्रसूर्य्यार्च्चिषौ दिव्या ध्वजा मेरु र्हिरण्मयः।
आतपत्रं ब्रह्मलोकमधोर्ध्वं चरणं स्मृतम् ॥ ८१ ( वि ७० )

एव ब्रह्मज्ञानेन मन्दरेण मथ्यते। वा शब्दाद् येन भक्तियोगेन च मथ्यात् तत्सारभूतं ब्रह्मसायुज्यामृतञ्च यस्यां मथुरायां लभ्यमिवेति। मथ्यते यद्यत् तन्मथुरा प्रयोजनीभूतं वस्तु ; मन्थधातो रौणादिको डुः तद्रातीति मथुरा ॥ ६८

अथ स्वविभूतीरपि ध्येयत्वेन दर्शयति—अष्टभि र्दिक्पालै र्यद् भूमिरूपं पद्मं विकाशितं, तदेव संसारार्णव-संप्लुतं सन्मम मानसं मम ज्ञान-सेवितं भक्तै ध्यातं मन्मानसो विभूति र्भूलोक इत्यर्थः ॥६९

चन्द्रसूर्य्ययोरिवार्च्चिषो येषां तथाभूता ध्वजाः मेरुः मदीय-ध्वजविभूति र्मेरुरित्यर्थः। अधोर्ध्वपातालसप्तकं अधोर्ध्वचरणं ॥७०

मथुरा-पदनिरुक्त्या तस्या महिमाधिक्यमुवाच—मथ्यत इति। येनैव ज्ञानेन सर्वं जगन्मन्थानकेनेव दधि मथ्यते जगदधिष्ठातु र्विवेकेन लाभाय, तस्य ज्ञानस्य सारभूतं स्थिरांशरूपं कूटस्थतया प्रतिपाद्यं यन्नराकृतिकं ब्रह्म यस्यां नित्यमस्ति दध्नीव नवनीतं, सा मथुरा निगद्यते। 'सारो बले मज्जनि च स्थिरांशे' इति विश्वः ॥ ७६

अथ स्थूलधियां विराडुपासनामुवाच—अष्टेति। अष्टभि र्दिक्पालिभि र्दलरूपै र्यद् भूमिरूपं पद्मं विकसितं प्रकाशमानं, यत् खलु संसार-रूपेणैव सञ्जातं, तत्प्रभृत्यखिलं जगत् मम परेशस्य मानसे संकल्पवृत्तिके सेवितं संकल्पेनैव तन्मया रचितं, मद्विग्रहतया तत्प्रथममुपास्यमित्यर्थः ॥ ८०



श्रीवत्सञ्च स्वरूपञ्च वर्त्तते लाञ्छनैः सह।
श्रीवत्सलाञ्छनं तस्मात् कथ्यते ब्रह्मवादिभिः ॥८२ (वि ७१)
येन सूर्य्याग्निवाक्चन्द्र-तेजसा स्वस्वरूपिणा।
प्रवर्त्तते कौस्तुभाख्यं मणिं वदन्तीशमानिनः ॥८३ (वि ७२)
सत्त्वं रजस्तम इति अहङ्कार श्चतुर्भुजः। ( वि ७३ )

श्रीवत्सं निजस्वरूपमेव चकार। लाञ्छनैः दक्षिणावर्त्तरोमभिः कुण्डलीकृतैः लक्षण-विशेषैः सह वर्त्तते अस्माद्धेतोः श्रीवत्सलक्षण तस्य तु विभूति र्भूलोके नास्तीत्यनुक्ते रवगम्यते। ७१

येन स्वस्वरूपिणा भरणायैकीकृतेन सह वर्त्तते, तं कौस्तुभाख्य-मणिं ईशमानिन ईश्वरताज्ञानिनः। येन कीदृशेन सूर्य्यादय स्तेजांसि यस्य तेन। अतः सूर्य्याग्निचन्द्राः कौस्तुभस्य वर्णतेजसां विभूतयः। वाक् सरस्वती तु ज्ञानतेजसो विभूतिरित्यर्थः ॥ ७२॥ सत्त्वादय स्त्रयो गुणाः अहङ्कारश्चेति चत्वारो भुजा भुजविभूतयः ॥ ७३

चन्द्रेति विभक्तिलोप श्छान्दसः। चन्द्रसूर्यौ मम दिव्या अर्चिषः, हिरण्मयो मेरु र्मम ध्वजा, ब्रह्मलोको ममातपत्रमित्युपास्यं। अथ ऊर्ध्वभावेन स्थितं पाताल-सप्तकं मम चरणमित्युपास्यं। सन्धि श्छान्दसः ; एकवचनं जात्या ॥ ८१

चिद्विग्रहे ब्रह्मणि श्रीवत्सञ्च व्याख्यात-लक्षणं। लाञ्छनैः धर्म-रेखादिचिह्नैः सह वर्त्तते। तत्स्थाने विराड विग्रहे वैराज-जीवलक्षण-स्वरूपमेव लाञ्छनै र्विराडवयवरूपैः सहोपास्यमित्यर्थः ॥ ८२

येनेति—सूर्य्यश्चाग्निश्च वाक् च सरस्वती चन्द्रश्च तेषां समाहारो येन स्वस्वरूपिणाऽसाधारणेन तेजसा वर्त्तते। तमेतः कौस्तुभाख्यं मणिमीश-मानिनो विराडीश्वर-बुद्धयो वदन्ति। सूर्य्यादितेजः कौस्तुभत्वेन ध्येयमित्यर्थः ॥

सत्त्वं रजस्तमोऽहङ्कारश्चेति भुजा यस्य स विराडीश्वरः। सत्त्वादय

पञ्चभूतात्मकं शङ्खं करे रजसि संस्थितं ॥ ८४
चलस्वरूपमत्यन्तं मनश्चक्र निगद्यते। ( वि ७४ )
आद्या माया भवेच्छाङ्गं पद्मं विश्वं करे स्थितं ॥८५(वि ७५)
आद्या विद्या गदा वेद्या सर्वदा मे करे स्थिता ॥ ८६
धर्मार्थकामकेयूरै र्दिव्यै 'र्नित्यमवारितैः' * ॥८७ (वि ७६)
कण्ठन्तु निर्गुणं प्रोक्तं माल्यते आद्ययाऽ'जया' †।
माला निगद्यत ब्रह्मन् तव पुत्रैस्तु मानसैः ॥८८ ( वि ७७ )

---

पञ्चभूतात्मकमिति—पञ्चभूतानि शङ्खस्य विभूतयः। करे रजसीति यस्य विभूतिः रजोगुण उक्तः तस्मिन्नेव करे स्थितः। ७४ ॥ आद्या नित्या माया अविद्याशक्तिः शार्ङ्गं, विश्वमिदमहङ्कारास्पदं जगत् पद्मं। ७५॥ आद्या नित्याविद्याशक्ति र्गदा धर्मार्थकाममोक्षै श्चतुर्भिः केयूरै र्मम चत्वारो भुजा अलङ्कृता इत्यर्थः। ७६

निर्गुणं ब्रह्म कण्ठं प्राहुः। आद्यया अजया विद्याविद्ययोरंशिन्या। मायया माल्यते आश्रियते माल्यमेति मानसैः सनकादिभिः॥ ७७॥

---

श्चक्र स्तद्भुजत्वेन चिन्त्या इत्यर्थः। पञ्चेति—रजसः करत्वेन भूतपञ्चकस्य पाञ्चजन्यत्वेन ध्यानमित्यर्थः ॥ ८४

चलस्वरूपं मनस्तच्चक्रत्वेन चिन्त्यं। अत्र सत्त्वस्य करत्वं। आद्या विक्षेप-शक्तिरूपा माया या तत् शार्ङ्गं। विश्वात्मकं यत् पद्मं तच्च तमसि करे स्थितं। तदुभयं तद्युग्मत्वेन ध्येयमित्यर्थः॥ ८५

आद्येति—अविद्यावरणशक्तिरूपा। अत्राहङ्कारस्य करत्वं॥ ८६

धर्मेति—विशेषणे तृतीया। धर्मादयः केयूरत्वेन चिन्त्या इत्यर्थः। अवारितैरबाधितैरित्यर्थः॥ ८७

---

* दिव्यमहारितैः। † यया।



कूटस्थं सत्स्वरूपञ्च किरीटं प्रवदन्ति मां ॥ ८९ (वि ७८)
क्षरोत्तमं प्रस्फुरन्तं कुण्डलं युगलं स्मृतम् ॥ ९० (वि ७९)
ध्यायेन्मम प्रियो नित्यं स मोक्षमधिगच्छति।
स मुक्तो भवति तस्मै स्वात्मानं च ददामि वै ॥ ९१
एतत्सर्वं भविष्यं वै मया प्रोक्तं विधे तव।
स्वरूपं द्विविधं चैव सगुणं निर्गुणात्मकं ॥ ९२ ( वि ८० )

---

सत्स्वरूपं सर्वकाल-सत्ताकं स्वकूटस्थं मामेव मत्किरीटं प्रवदन्ति।॥७८॥ क्षरोत्तमं हिरण्यगर्भं॥ ७९

स्वगुणं विराट्स्वरूपं विभूतिशब्दवाच्यं। निर्गुणं प्राकृतगुणातीतं कल्याणमयं मम श्रीविग्रहरूपं विभूतयोपि काश्चिन्मायिक्यो निर्गुणपद्यवाच्याः॥ ८०

---

कण्ठमिति—निर्गुणं नैरञ्जन्यं मोक्षः स कण्ठत्वेन चिन्त्य इत्यर्थः। तच्च ययाऽऽद्ययाऽजया मायया माल्यते आच्छाद्यते सा तव मानसैः पुत्रैः सनकाद्यै र्माला निगद्यते। मालात्वेन चिन्तयितुमुपदिश्यत इत्यर्थः। मायापसरणे मोक्षस्फूर्त्तिरिति भावः॥ ८८

कूटस्थं सदैकरसं सत्स्वरूपं सदाख्यं विराडन्तर्यामिणं मां किरीटं प्रवदन्ति, तदन्तर्यामी मुकुटत्वेन चिन्त्य इत्यर्थः॥ ८९॥ क्षरे विराड्रूपे जगति यदुत्तमं सांख्ययोगरूपं युगलं, तत् कुण्डलं स्मृतं। 'बिभर्त्ति सांख्यं योगञ्च देवो मकरकुण्डले।' इति स्मृतेः; प्रस्फुरन्तमिति पुंस्त्वं छान्दसं॥

एवं स्थूलधियां विराडुपासनामुपदिश्यतया सूक्ष्मधियां साक्षाद्रूपध्यानेन मुक्ति र्भवेदितिभावेनोवाच—ध्यायेदिति। स मोक्षमिति स्वरूपावरिकया मायया विमुच्यते स मुक्तो भवतीति गुणावरिकया च तया विमुच्यते साक्षात्कृतब्रह्मस्वरूपगुणविभूतिकः कृतार्थो भवतीत्यर्थः। एवमाह श्रुतिः—

स होवाचाब्जयोनिः। व्यक्तानां मूर्त्तीनां प्रोक्तानां कथमाभरणानि भवन्ति ( वि ८१ )॥ कथं वा देवा यजन्ति रुद्रा यजन्ति ब्रह्मा यजति 'ब्रह्मजा' * यजन्ति विनायका यजन्ति द्वादशादित्या यजन्ति वसवो यजन्ति अप्सरसो यजन्ति गन्धर्वा यजन्ति ( वि ८२ )॥ 'स्वपदं गता' ‡ ( वि ८३ ) अन्तर्धाने तिष्ठति ( वि ८४ ) कां मनुष्या यजन्ति॥ ९३ ( वि ८५ )॥

---

व्यक्तानां पृथग्भूतानां। तत्र हि रामस्य राममूर्त्ति रित्यादि-नोक्तानां मूर्त्तीनां केन प्रकारेणाभरणानि तत् कथय॥ ८१॥ कथं किमर्थं वा यजन्तीति तत् कथय॥ ८२॥ स्वपदन्त्वगादिति कया मूर्त्त्यैकादशयेति स्वपदं गतेत्युक्तं॥ ८३

अन्तर्धाने तिष्ठतीति कया मूर्त्त्या दशमी ह्यन्तर्धाने तिष्ठतीति उक्तं॥ ८४॥ कां मनुष्या यजन्ति इति कया वा मूर्त्त्या द्वादशमेति भूम्यां तिष्ठतीत्युक्तं॥ ८५

---

'भूयश्चान्ते विश्वमाया-निवृत्ति र्विमुक्तश्च विमुच्यते' इति॥ ९१

उपसंहरति—तस्मै तदिति। भविष्यमिति त्वयाप्यग्रेऽनुभाव्य-मुपदेश्यं चेत्यर्थः। एतदिति—विवृणोति स्म स्वरूपमिति सगुणं विराडाकारमष्टदिक्पालिभिरित्यादिनोक्तं। निर्गुणं द्विभुज-चतुर्भुजरूपमष्टपत्रं विकसितमित्यादिनोक्तं॥ ९२

अथ पूर्वोक्तेष्वर्थेषु संशयान्तराणि निराचिकीर्षु रब्जयोनिः पप्रच्छ—स हेति। प्रष्टव्यानुवाच व्यक्तानामिति उपासकेषु प्रकटानामित्यर्थः प्रोक्तानां। तत्र हि रामस्य राममूर्त्ति रित्यादिना पूर्वत्र गदितानां कथमिति केन प्रकारेण

---

* ब्रह्मजा। ‡ स्वपदन्त्वगात्।



स होवाच तं हि वै नारायणो देवः आद्या अव्यक्ता द्वादशमूर्त्तयः सर्वेषु लोकेषु सर्वेषु वेदेषु सर्वेषु मनुष्येषु तिष्ठन्ति॥ ९४ ( वि ८६ )

रुद्रेषु रौद्री ब्रह्मण्येषु ब्राह्मी देवेषु दैवी मानुषेषु

---

प्रथम-प्रश्नस्योत्तरमदत्त्वा द्वितीयप्रश्नस्योत्तरमाह — आद्या नित्या अव्यक्ताः प्राकृतनेत्रै रदृश्याः॥ ८६

रुद्रेषु रुद्रलोकेषु रौद्री रुद्रैः पूज्या। एवमग्रेऽपि ब्रजस्था अपितु तल्लोके सेवन्ते। रौद्री संहरणशक्तिप्रदा। ब्राह्मी वेदार्थप्रदा

---

तासामाभरणानि कथ्यन्ते इत्यर्थः। कथं देवा इति देवा मरुतः? कां च यजन्तीत्यर्थः। स्वपदं गतेति—एकादशमेति स्वपदं गतेति या प्रोक्ता सा कीदृशीनां च कथं यजन्तीत्यर्थः। अन्तर्धाने तिष्ठतीति दशमी ह वै ह्यन्तर्धाने तिष्ठतीति या प्रोक्ता सा कीदृशीत्यादि? कां मनुष्या इति द्वादशमेति—भूम्यां तिष्ठतीति या प्रोक्ता सा च कीदृशीत्यादीत्यर्थः। अत्र त्रयः प्रश्नाः व्यक्तानां मूर्त्तीनां कथमाभरणानीत्येकः, कथं देवा यजन्तीत्यादि द्वितीयः, कां मूर्त्तिं के यजन्तीति तृतीयश्च॥ ९३

एवं पृष्टो नारायणः प्रथमस्योत्तरमन्तर्धापयन्नपरयो स्तदुवाच—स हेति। आद्या अनादिसिद्धाः। अव्यक्ता विमुखानामगोचराः सर्वेषु सर्वेषु लोकेषु सर्वेषु देवेषु मध्यलोकेषु सर्वेषु मनुष्येषु तत्तल्लोकेषु सर्वत्रेत्यर्थः। तिष्ठन्ति तत्तल्लोकस्थेषु उपासकेषु प्रस्फुरन्तीत्यर्थः। ननु पूर्वत्र मथुराङ्गभूतायां द्वादशवन्यां तासां स्थितिरुक्ता। तस्यामेव देवा तिष्ठन्तीत्यादिना सा निर्धारिता च। इह पुन स्तत्तल्लोकेषु तासां स्थितिरिति कथमिति चेदेवं गृहाण—तत्तद्ध्यानध्यानेन तत्तल्लोकस्थैरपि तै स्ता उपास्यन्त इति॥ ९४

के कां यजन्तीत्यस्य प्रश्नस्योत्तरं उवाच रुद्रेष्वित्यादिना—स्वस्वभावा-नुसारेण रुद्रादिकर्त्तृकमुपासनमाभरणार्पणं च ज्ञेयं। ब्रह्मण्येषु ब्रह्मानुयायिषु

मानुषी विनायकेषु विघ्ननाशिनी आदित्येषु ज्योति र्गन्धर्व्वेषु गान्धर्व्यप्सरःस्वेव गौ र्वसुष्वेर्वं काम्यान्तर्धाने प्रकाशिनी। आविर्भाव-तिरोभावा स्वपदे तिष्ठति ॥ ९५ ( वि ८७ )

तामसी राजसी सात्त्विकी मानुषी ॥९६ (वि ८८)

---

दैवी देवनप्रदा। मानुषी धर्मादिप्रदा। विघ्नविनाशयित्री ज्योतिः ज्योतिःप्रदा। गान्धर्वी गान्धर्वगानप्रदा। अप्सरःस्वप्येवमनेन प्रकारेण एव, गीयते इति गौः गानप्रदेत्यर्थः। अन्तर्धाने या तिष्ठति सा अप्रकाशिनी, तस्या उपासकाभावात् सा आविर्भाव-रहिता इत्यर्थः। या स्वपदे वैकुण्ठादौ तिष्ठति साविर्भावा आविर्भाववती तिरोभाववती च ॥

या मानुषी मानुषाकारद्विभुजा सा सगुणभक्त्युपास्यत्वात् तामस्यादिः ॥ ८८

---

सत्यलोकस्थेषु ब्रह्मादिष्वधिकारिष्वित्यर्थः। मानुषेष्विति ब्रह्मज्ञानां सनकादीनां ग्रहणं। तेषां देवत्वेऽपि मानुषेषु गतिप्राचुर्य्यात् मानुषत्वमुपचरितं। अप्सरःस्वेवं गौरिति गीयत इति गौः, गाने प्रकाश्यमानेत्यर्थः। पृषोदरादित्वात् पदसिद्धिः। वसुष्वेवमिति—वासवीत्यर्थः काम्या वाञ्छित-संपत्प्रदा, अन्तर्धाने इति यान्तर्धाने तिष्ठति सा स्वप्रकाशिनी श्रवणमात्रगोचरा, न तु दृश्येत्यर्थः। आविर्भावेति—या कदाचिदाविर्भवति अन्तर्भावात्तिरोधत्ते च, सा स्वपदे गोकुलस्यैव प्रकाश-विशेषे तिष्ठति। यद् ब्रह्मह्रदोद्धृतान् ब्रजस्थान् प्रति दर्शितं। रौद्रादय एकादशमूर्त्तय एतस्या अवतारभूता स्तासामियमवतारिणीति बोध्यं। आविर्भावतिरोभावा स्वपदे तिष्ठती यत्र बृहद्गौतमीये भगवद्वाक्यं—'इदं वृन्दावनं रम्यं मम धामैव केवलं। पञ्चयोजनमेवास्ति वनं मे देहरूपकम्। कालिन्दीयं सुषुम्नाख्या परमामृतवाहिनी। अत्र देवाश्च भूतानि वर्त्तन्ते सूक्ष्मरूपतः। सर्वदेवमयश्चाहं न त्यजामि वनं क्वचित्। आविर्भाव स्तिरोभावो भवेन्मेऽत्र युगे युगे ॥ तेजोमयमिदं रम्यमदृश्यं चर्म्मचक्षुषेति' ॥ ९५



विज्ञानघनानन्दघन—सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति ॥ ९७ ( वि ८९ ) ॐ प्राणात्मने ( नमः )। ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै प्राणात्मने नमो नमः ॥९८

---

सैव मानुषी या निर्गुणभक्त्युपास्या सा विज्ञानघना शान्त-भक्तानां, आनन्दघना दासादिप्रेमभक्तानां इति द्विविधैव सच्चिदानन्दैक-रसे निर्गुणे भक्तियोगे ॥ ८९

---

अथ द्वादशीमुवाच—तामसी। त्रिविधानां नृणां मल्लानामशनिरित्यादि-न्यायेन त्रिधा स्फुरतीत्यर्थः। मानुषी गौण्या लक्षणया पूर्व्वैव मानुष-संस्थानेत्यर्थः ॥ ९६

विशुद्धभक्तिमतां तु विशुद्धस्वरूपा सा स्फुरतीत्युवाच—विज्ञानेति। मूर्त्तविज्ञान-रूपत्वाद् विज्ञानघना मूर्त्तानन्दघना चोक्ता, 'मूर्त्तौ घन' इति भगवान् पाणिनिः। काठिन्येऽर्थे वाच्ये हन्त रप् प्रत्ययो घनश्चादेश इति सूत्रार्थः। धर्म्मेण धर्म्मत्राक्षिप्यते। भक्तियोगस्य स्वरूपं बोधयितुं विशिनष्टिस्म सच्चिदिति। ह्लादिनी-सार-समवेतसंवित्सारेत्यर्थः। ईश्वरस्याः श्रवण-कीर्त्तनादि-क्रियारूपत्वं विज्ञानानन्दमूर्त्ते रीश्वरस्य नख-चिकुरादि-प्रवाकत्व-वदिति भाष्यपीठकादिष्वस्य विस्तरः ॥ ९७

अथ कथं यजन्तीत्यस्य प्रश्नस्यैभि र्मन्त्रै र्यजन्तीत्युत्तरं तत्तद् यजना-ङ्गोपलक्षणतयोवाच ॐमित्यादिभि र्जाग्रत्स्वप्नेत्याद्यन्तैः सप्तदशभिः। यः प्रणव-स्वरूपः स्वांशेन प्राणाख्यस्य वायो रात्मा 'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति' श्रुतेः। तस्य प्रवर्त्तक स्तस्मै वै नित्यं नमो नमः अत्यादरेणात्मानं समर्पयामीत्यर्थः। कीदृशायेत्यपेक्षायामोमिति—ॐकारादिभि स्त्रि र्नामभि र्वाच्यायेत्यर्थः। सुपां सुलुगित्यादि-सूत्राच्चतुर्थ्या लुक्। भू र्भुवःस्वरिति प्रधानाख्यस्त्रयाणां भूरादिलोकत्रयरूपाय विश्वरूपा-येत्यर्थः। एवमुत्तरेषु च व्याख्येयं ॥ ९८

ॐ कृष्णाय गोविन्दाय गोपीजनवल्लभाय ॐ तत्सद् भूर्भुवः स्व स्तस्मै नमो नमः ॥ ९९ ॥ ( वि ९० ) ॥

ॐ अपानात्मने ( नमः ) । ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै अपानात्मने नमः ॥ १०० ॥ ॐ कृष्णाय प्रद्युम्नायानिरुद्धाय ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ १०१ ( वि ९१ ) ॐ समानात्मने ( नमः ) । ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै समानात्मने नमः ॥ १०२ ॐ कृष्णाय रामाय ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ १०३ ॥ ॐ उदानात्मने ( नमः ) । ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै उदानात्मने नमो नमः ॥ १०४ ॥ ॐ कृष्णाय देवकीनन्दनाय ॐ तत्सद् भूर्भुवः स्व स्तस्मै वै

---

अथ भक्तिकर्त्तुर्योग्यतां प्राप्तुं क्रियाशक्तीनां पञ्च-प्राणानां नियन्तृत्वेन भगवन्तं स्तुवीत इति विधिं द्योतयन् स्तुतिमाह—ॐ मिति । प्रणवादयो वैदिकमन्त्राणां क्वचिदाद्यन्ते क्वचिदन्ते च पठ्यन्ते एव प्रायः । ॐ कृष्णायेति—प्रणवान्तयोजितं कृष्णमहं नमामि, मह्यं भजने भक्तिं स ददातु इति भावः ॥ ९०

श्रीकृष्णाय प्रद्युम्नायानिरुद्धाय इति तमेव कृष्णं प्रद्युम्नानिरुद्ध-

---

असाधारणनामवाच्यतयोवाच—ॐ कृष्णायेति ॥ ९९।१००

प्रद्युम्नादि-रूपाय नम उपदिशति स्म—ॐ कृष्णाय प्रद्युम्नायेति ॥ १०१।१०२ ॥ वलदेवरूपाय नम उपदिशति स्म—ॐ कृष्णाय रामायेति ॥

नन्दवसुदेवात्मजरूपाय नम उपदिशति स्म—ॐ कृष्णाय देवकीति देवकीशब्दो नन्दपत्नीं वसुदेवपत्नीं चाहेति पूर्वमुक्तं । दारको नन्दनोऽर्भक



नमो नमः ॥ १०५ ॥ ॐ व्यानात्मने ( नमः ) । ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै व्यानात्मने नमो नमः ॥ १०६ ॥ ओम् गोपालाय निजरूपाय ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ १०७ ॥ ओम् योऽसौ प्रधानात्मा गोपाल ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥१०७(वि ९२) ओम् योऽसाविन्द्रियात्मा गोपाल ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ १०९ ( वि ९३ ) ॥ ओम् योऽसौ भूतात्मा गोपाल ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ ११० ( वि ९४ )

---

स्वरूपेण अपानान्तर्यामिणं नमामीत्यर्थः ॥ ९१ ॥ ततश्च ज्ञानावरण-निरसनार्थं माया-नियन्तारं गोपालं नमन् स्तुवीतेति विधिं द्योतयन्नाह —योऽसौ प्रधानात्मेति ॥ ९२

योऽसाविन्द्रियात्मा इति । मदीयमनःश्रोत्रादीनीन्द्रियाणि श्रीगोपालः स्वीयचिन्तन-श्रवणादिषु प्रवर्त्तयन् तमहं नमामीति भावः ॥

योऽसौ भूतात्मेति । मदीयस्थूलसूक्ष्मभूतानि श्रीगोपालः

---

इति धनञ्जयः । ५५ देवक्या सह कृष्णस्य मातापुत्रभावः पद्मकोरकगत-लघुवृहत्पत्रवदनादितो युगपत् सिद्धो बोध्यः । प्रपञ्चगते थाम्नि तु लोकवत् पूर्वोत्तरभावेन स्थितः ॥ १०५।१०६ ॥

द्विभुजमभ्राभं तरुणं पीतवाससा रम्यं वेणुशृङ्गधरं रूपं तन्मे यशोदा सूनो गोपालस्य निजरूपं त्वया ध्येयमितिभावेनोवाच—ॐ गोपालायेति । निजमसाधारणमव्यञ्जयं रूप यस्य तस्मै । अतः स्तोत्रोपक्रमे तनेतदेवोक्तं 'नौमीड्य तेऽभ्रवपुषे' इत्यादिना ( १०।१४।१ ) ॥ १०७ ॥ प्रधानात्मा-कारेणेदृशापि वपुषा प्रकृतेरन्तर्यामी ॥ १०८ ॥ इन्द्रियात्मा स्वेतरेषां

ओम् योऽसावुत्तमः पुरुषो गोपाल ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥१११ ( वि ९५ )॥ ओम् योऽसौ 'परं ब्रह्म गोपाल' * ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ ११२ ( वि ९६ )॥ ओम् योऽसौ सर्वभूतात्मा गोपाल ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ११३ [ वि ९७ ] ॥ ओम् योऽसौ जाग्रत्स्वप्नसुषुप्ति-

---

स्वीयचिन्तनादिषु प्रवर्त्तयन, तमहं नमामीति भावः ॥ ९४

योऽसावुत्तमः पुरुष इति—श्रीगोपाल एव मम प्रभु र्भगवान् मां स्वभजनेनानन्दत्विति भावः ॥ ९५ ॥ योऽसौ ब्रह्म परमिति—श्रीगोपाल एव ब्रह्म परं 'ब्रह्मणो हि प्रतिष्ठाहमिति' श्रीगीतोक्तेः। मां भजनानन्दमयं करोत्वित्यर्थः ॥ ९६

सर्वभूतात्मा सर्वजीवान्तर्यामि-पुरुष स्तस्याप्यन्तर्यामी। 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्युक्तेः। मदन्तर्यामिनं मां भक्तौ प्रवर्त्तयितुं श्रीगोपाल आदिशत्विति भावः ॥ ९७

---

ब्रह्मादि-स्तम्बान्तानां स्वांशेन करण-प्रवर्त्तकः ॥ १०९

भूतात्मा वियदादीनां पञ्चानां स्वांशेनान्तर्यामी ॥ ११० ॥ उत्तमो बद्ध-नित्यमुक्तेभ्यो जीवेभ्य उत्कृष्टतमः पुरुषः, 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति स्मृतेः ॥१११

एवं वेदान्तैः परं ब्रह्मेति यदुच्यते तदहमेवेति विज्ञाय मां नमस्कुर्विति भावेनोवाच—योऽसाविति ॥ ११२ ॥ सर्वभूतात्मा निखिल-जीवान्तर्य्यामी ॥

अथ वासुदेवाद्यंशिनं मां नमस्कुर्विंतिभावेनोवाच—ॐ योऽसाविति। जाग्रदाद्यवस्थात्रयवत्सु जीवेषु संकर्षणादीनां नियामकतया संबन्धोऽस्त्येव।

---

* ब्रह्मपरं ब्रह्मगोपाल।



मतीत्य तुर्य्यातीतो गोपाल ओम् तत्सद् भूर्भुवः स्व स्तस्मै वै नमो नमः ॥ ११४ [ वि ९८ ]॥

एको देवः सर्वभूतेषु गूढ़ः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो 'निर्गुणश्च' * ॥ ११५ ॥ ( वि ९९ )

---

जाग्रत्-स्वप्नौ विषयानुभावकौ। सुषुप्ति रात्मसुखानुभाविका। तुर्य्यं हि गुणातीतं ब्रह्मसुखानुभावकं। तदप्यतीतः श्रीगोपालः प्रेमसुखानुभावकः इत्यर्थः। इति श्रीगोपालः सर्वस्वस्वरूपमूलभूतं मां स्वप्रेमसिन्धुरसमग्नं करोत्विति भावः ॥ ९८

अथ श्रीनारायणः स्वयं गुरुरूपस्य देवेन श्रीकृष्णेन स्वाभेदमुपदिशति—एक इति ॥ ९९

---

तदवस्थात्रयमस्पृशन् य स्तुरीयो वासुदेव श्चतुर्थो व्यूहः, यश्च तदंशी परव्योमाधिपति स्तमतीत्य स्थितः, तदंशी योऽहं गोपाल स्तस्मै इति कथमस्यावतारस्य ब्रह्मता भवतीत्यस्योत्तरमभूत। अप्रपञ्चात प्रपञ्चेऽवतरन् अवतारः। तत्राभिव्यक्तनिखिलगुणकतयावतीर्णत्वादस्य पूर्णत्वमिति भावः ॥ ११४

मन्त्रैः स्वेज्यामभिधायाथ गुणविशेषग्राहिणो भक्तान् प्रत्यंशांशिरूपं स्वं तुल्यगुणतयोपदिशति स्म—एक इति। एके मुख्यान्यकेवला इति नानार्थवर्गात, निखिलतत्त्वमुख्योऽहमित्यर्थः। देवो द्योतमानः सर्वाराध्यश्च सर्वेषु भूतेषु गूढ़ स्तदन्तर्वर्त्ती परिच्छेदं प्राप्तं व्यावर्त्तयितुं सर्वव्यापीति। आकाशवत्ताटस्थ्यं व्यावर्त्तयितुं सर्वभूतान्तरात्मेति। सुखदातृत्व वक्तुं कर्माध्यक्ष इति। वेदोक्तैः कर्मभिराराधित स्तेषां फलप्रद इत्यर्थः। एवमाह सूत्रकृत 'फलमत उपपत्ते' रित्यादिना। सर्वाश्रयत्वं वक्तुं सर्वभूताधिवास इति। शुभाशुभद्रष्टृत्वं वक्तुं साक्षीति। सार्वज्ञ्यं वक्तुं चेता इति। यद्वा

---

* निर्गुणोऽहं।

रुद्राय नमः । आदित्याय नमः । विनायकाय नमः । सूर्य्याय नमः । विद्यायै नमः । इन्द्राय नमः । अग्नये नमः । पित्रे नमः । निर्ऋतये नमः । वरुणाय नमः । मरुते नमः । कुवेराय नमः । ईशानाय नमः । ब्रह्मणे नमः । सर्वाभ्यो देवताभ्यो नमः ॥ ११६ ( वि १०० ) ॥

दत्त्वा स्तुतिं पुण्यतमां ब्रह्मणे स्वस्वरूपिणे ।
कर्त्तृत्वं सर्वभूतानामन्तर्धाने वभूव सः ॥११७ (वि १०१)

---

अथ तद्विभूतेरपि नमस्यत्वेन उपदिशति-रुद्राय नम इति ॥

तदेव पुण्यतमां स्तुतिं दत्त्वा सर्वभूतानां कर्त्तृत्वञ्च दत्त्वा अन्तर्हितमित्यर्थः । स्वस्य स्वरूपं ध्येयं वर्त्तते यस्य तस्मै ॥ १०१

---

ज्ञानदातृत्वं वक्तुमेतत्, चिती संज्ञाने चेतयति अज्ञाननिद्रातो जागरयति स्वतत्त्वज्ञानं सत्प्रसङ्गेन प्रदापयति मोक्षप्रद इत्यर्थः । असुन प्रत्ययः । मोक्षलभ्यं स्वरूपं वक्तुं केवल इति विशुद्ध इत्यर्थः । तत्त्वं कुतः निर्गुण इति मायागुणैरस्पृष्ट इत्यर्थः ॥ ११५

अथ मदीयत्वेन मद्विभूतयो देवाश्च मद्भक्तस्य नमस्या इतिभावेन रुद्रायेत्यादीन पञ्चदश मन्त्रानुपदिदेश । तत्र रुद्राय तद्व्यूहैकादशात्मने, आदित्याय द्वादशव्यूहात्मने सूर्य्याय व्यूहिने, विद्यायै गौर्दैव्यै, ईशानाय व्यूहिने रुद्राय, ब्रह्मणे चतुर्मुखाया; सङ्कलनायाह—सर्वाभ्य इति ॥११६

अथ मुनि र्विद्यामुपसंहरतिस्म—दत्त्वेति । स गोपालः सर्वेश्वरः कृष्णः ब्रह्मणे चतुर्मुखाय पुण्यतमा मतिमनोज्ञामविद्याविनाशिनीमुत्तराय निरुपमां स्तुतिं दत्त्वा प्रकाश्य सर्वभूतानां कर्त्तृत्वं च दत्त्वा समर्प्य स्वयमन्तर्धाने बभूव । तदप्रत्यक्षोऽभूदित्यर्थः । स्वस्वरूपिणे स्वस्य गोपालस्यात्मनः स्वरूपं ध्येयतया यस्मिन्नस्ति तस्मै स्वभक्तायेत्यर्थः ॥ ११७



ब्रह्मणो ब्रह्मपुत्रेभ्यो नारदाच्च श्रुतं यथा ।
तथा प्रोक्तं तु गान्धर्वि ! गच्छ त्वं स्वालयान्तिकं ॥११८
( वि १०२ )

इत्याथर्व्वणोपनिषत्सु श्रीगोपालतापन्यामुत्तर-विभागः समाप्तः ॥

श्रीश्रीकृष्णचैतन्याय नमः ।

---

'कथम्वा ज्ञातोऽसौ मुने' इत्यस्योत्तरं दुर्वासा आह—ब्रह्मणः सकाशात् ब्रह्मपुत्रैः सनकादिभिः, तेभ्यो नारदः, नारदाच्च मया श्रुतः ॥

श्रीमद्गोपाल-तापन्या विवृतिः पूर्णतां गता ।
गान्धर्वासरसस्तारे विश्वनाथाख्य-लेखकात् ॥

---

अथ मुनिः स्वोपदेश-प्रामाण्याय गान्धर्वीं प्रति संप्रदायमुवाच—ब्रह्मण इति । श्रीगोपालदेवाद् ब्रह्मणा श्रुतमेतद् गोपाल-स्वरूप-गुणविभूति-याथात्म्यं, ब्रह्मणः सकाशाद् ब्रह्मपुत्रैः सनकाद्यैः, तेभ्यो नारदेन, नारदाच्च मया यथा श्रुतं त्वन्नाथरहस्यं, तथैव त्वां प्रति प्रोक्तं, नास्त्यत्र वर्णव्यत्यय इत्यर्थः । अथ श्रुततद्रहस्या त्वं स्वालयान्तिकं गच्छेति व्रजोपान्त्यवनेष्वधुना स विक्रीडन्नस्ति, तं मदुक्तलक्षणं प्रतीत्य स्वालयं याहि ; हे गान्धर्वि गन्धर्वेषु च तद्भक्ति-प्रचारायांशेन कृतावतारे श्रीराधिके ! देवि सर्वेश्वरि ! त्वद्व्रजगोपान्तर्निवासिनि मयि प्रसीदेत्योम् ॥ ११८

विद्याभूषण-भणितं श्रीमद्गोपालतापनीभाष्यं ।
तापयतु वल्लवीनां मित्रं गोपालकं परं ब्रह्म ॥

इति श्रीगोपालतापनी व्याख्याता ।

---